अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला–५४

# प्राश्निकदृष्टिः

(प्रश्नशिरोमण्याधारेण उत्तराणां समीक्षणम्)

समीक्षकः
डॉ. आशिषः जे.

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः



राष्ट्रहिताय संस्कृतम्

कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
तथा
न्यू भारतीय बुक कॉर्पोरेशन, नव देहली

2020

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला – 54

# प्राश्निकदृष्टिः

(प्रश्नशिरोमण्याधारेण उत्तराणां समीक्षणम्)

समीक्षकः
डॉ. आशिषः जे.

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः



कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
एवं
न्यू भारतीय बुक कॉरपोरेशन, दिल्ली

शीर्षकम् — प्राश्निकदृष्टिः

समीक्षकः — डॉ. आशिषः जे.

प्रधानसंपादकः — आचार्यः श्रीनिवासः वरखेडी
कुलगुरु, क.का.सं.वि., रामटेकम्

संपादकः — आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः
क.का.सं.वि., रामटेकम्

संपादकमण्डलम् — डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक
डॉ. वीना गाणु, नागपुर.

प्रकाशनवर्षम् — २०२०

आवृत्तिः — प्रथमा

मूल्यम् — 335.00

आय.एस.बी.एन. — 9788183154062

मुखपृष्ठम् — श्री. उमेश पाटील, क.का.सं.वि., रामटेकम्

प्रकाशकः — कुलसचिवः,
कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः,
प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्.
एवं
न्यू भारतीय बुक कॉरपोरेशन
२०८, द्वितीय तल, प्रकाशदीप बिल्डिंग,
४७३५/२२, अंसारी रोड, दरिया गंज,
नई दिल्ली – ११०००२
फोन नं. : २३२८०२१४, २३२८०२०९



एस. के. आफॉसेट, दिल्ली

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success.

My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek  
10th January 2020

Prof. Srinivasa Varakhedi  
Vice Chancellor, KKSU

# Kavikulaguru Kalidas Sanskrit University
# All India Oriental Conference

**100th Year 50th Session**
**10th-12th January, 2020**

## Chief Patron
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

## Patron
Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

## AIOC President
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

## AIOC General Secretary
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

## AIOC Local Secretary
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

## Additional Local Secretary
Dr. Harekrishna Agasti
Dr. Kalapini Agasti
Dr. Dinakar Marathe
Dr. Parag Joshi

## Organising Committee
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek

Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Srinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

## विषयानुक्रमणिका

## प्रस्तावना

प्रश्नशास्त्रसम्बद्धग्रन्थेषु प्रश्नशिरोमणेः अमूल्यस्थानं विद्यते। ग्रन्थोऽयं सङ्क्षेपाध्यायः, विशेषाध्यायरूपेण द्विधा विभक्तोऽस्ति। ग्रन्थारम्भे कर्ता स्वनाम, वंशविवरणञ्च एवं प्रददात्-

**प्रणम्य भक्त्याच्युतविच्युतापदं सदा सदानन्दपदं शिवापदम्।**
**त्रिपाठिवाल्मीकजरुद्रपण्डितस्तनोति सत्प्रश्नशिरोमणिं मणिम्॥**

इति।

तथैव कर्ता स्वनामविवरणं प्रथमस्याऽध्यायस्यान्ते एवं प्रदत्तवान् - "**इति श्रीत्रिपाठिरुद्रधरकल्पिते प्रश्नशिरोमणी संक्षेपाध्यायः।**" एवमेव द्वितीयाध्यायस्यान्ते - "**इति श्री वाल्मीकवंशावतंसश्रीमन्त्रिपाठि-रुद्रमणिप्रकल्पिते प्रश्नशिरोमणौ विशेषाध्यायः समाप्तः**" इति लिखितमस्ति। ग्रन्थेऽस्मिन् अन्तिमे श्लोके कथितं यत् –

"**इति रुद्रमणिप्रकल्पितो जगदम्बापदयोः समर्पितः।**
**भवताच्छुभदः सुकर्मिणां पठतां प्रश्नशिरोमणिर्नृणाम्॥**"

एतैः विषयैः ज्ञायते यत् रचनाकारस्य नाम पण्डितरुद्रमणिरिति तथैव सः वाल्मीकवंशोद्भवाः, जगदम्बायाः पार्वत्या भक्तेतः इति। परन्तु तेषां निवासस्थानं, कालादिविषये सङ्केतो नोपलभ्यते। ग्रन्थस्य सुललितकविता माधुर्येण पण्डितरुद्रमणेः पाण्डित्यमवगमयति। ते व्याकरण–कोश–काव्य–छन्दोग्रन्थ–ज्योतिषशास्त्रादिविषयेषु पारङ्गताः आसन्।

**प्रश्नशिरोमणेः वैशिष्ट्यम् –**

प्रश्नशिरोमणिं प्रश्नशास्त्रेषु मुख्यग्रन्थ इति गण्यते। आचार्यवराहमिहिरेण लिखितस्य दैवज्ञवल्लभाग्रन्थस्य व्याख्याकारः "डॉ. शुकदेवचतुर्वेदीमहोदयः" प्रश्नशिरोमणिग्रन्थस्थ कांश्चन श्लोकान् उदाहरणरूपेण अस्वीकुर्वन्। वराहमिहिरात्मजेन पृथुयशेन विरचित "षट्पञ्चाशिका" ग्रन्थस्य व्याख्याकारः "डॉ. सुरेशचन्द्रमिश्रोऽपि" प्रश्नशिरोणिग्रन्थगतान् अनेकविषयान् स्वग्रन्थस्य तुलानात्मकाध्यायनावसरे स्वीकृतवान्। आचार्य भट्टोत्पलकृत "आर्यासप्ततिः" तथा प्रश्नज्ञानग्रन्थस्य च व्याख्याकारः "डॉ. शुकदेवचतुर्वेदीमहोदयः" प्रश्नशिरोमणिस्थान् अनेकान् श्लोकान् तुलनात्मकाध्ययनावसरे उदाहृतवान्। एवमेव अनेके आचार्याः अस्य ग्रन्थस्य श्रेष्ठत्वमङ्गीचक्रुः।

ग्रन्थेऽस्मिन् पण्डितरुद्रमणिः, शकुन–स्वराक्षर–चेष्ठा इत्यादि विषयज्ञानमल्पमेव दत्तवानासीत्। तथैव ते प्रश्नकालग्रहस्य वशादेव फलं वक्तव्यमिति प्रधानरूपेण संस्थापयामास। प्रश्नशास्त्रे कीदृशाः प्रश्नाः दृश्यन्ते, तेषां सर्वेषां समाधानानि अस्मिन्नेव ग्रन्थे उपलभ्यन्ते। प्रश्नशास्त्रज्ञानाय प्रश्नशिरोमणिग्रन्थमेकमलं भवति। ग्रन्थस्यास्य पठनेन अन्यग्रन्थावश्यकताविरहः इत्यत्र नास्ति लेशोऽपि संशयस्य।

## प्रथमोऽध्यायः

# सङ्क्षेपाध्यायः

**कार्यसिद्धियोगः -**

जगति जनाः सर्वदा कार्यरताः भवन्ति। योगवासिष्ठे एवं कथितमस्ति यत्“**अकर्म निरतः सिद्धिं कथं प्राप्स्यसि**[1]” इति। परन्तु ईशावास्योपनिषदि तु “**ॐ कृतो स्मर कृतस्मर**[2]“ इत्युल्लिखितम् अस्यार्थः शाङ्करभाष्ये एवमुक्तः यत् **“यन्मया बाल्यप्रभृत्यनुष्ठितं कर्म तच्च स्मर”** इति। अत एव श्रीमद्भागवद्गीतायां भगवान् पार्थं“**कुरुकर्माणि**[3]” इत्यबोधयत्।

यद्येकः किमपि कार्यमारम्भते तर्हि तत्कार्यमसम्पूर्णं त्यक्तुं नेच्छति। यदा किमपि महत्वपूर्णस्य अथवा कठिनकार्यस्य प्रारम्भात् पूर्वम् अवश्यं तत् कार्यं शुभेन पूरयितुं वाञ्छति। अतः कार्यस्य प्रारम्भात् पूर्वमेव तस्य फलज्ञानार्थं पण्डितरुद्रमणिः प्रश्नशिरोमणिनामके ग्रन्थे कांश्चन योगान्अवदत्।

पण्डितरुद्रमणेः अभिप्रायानुसारेण प्रश्नकर्तुः इष्टफलज्ञानात् पूर्वं पृच्छकः तथैव प्रश्नपतिः एतयोः उभयोः जाति-रूप-गुण-वर्ण-अवस्थावर्णनं क्रमशः करणीयम्। एतदर्थम् एवमुक्तमासीत्

---

[1] (योगवासिष्ठः.१.१.१३)

[2] (ईशावास्योपनिषद्.१७)

[3] (भगवद्गीता.२.४८)

"**पृच्छकस्तनुपतिः कृतिनाथः प्रश्नपः खलु**[4]"इति। अर्थात् लग्नेशात् पृच्छकः तथैव कार्येशात् प्रश्नपतेः विचारः करणीयः। अस्मिन्विषये आगामिश्लोकेषु विचार्यते। इदानीं विषयप्रवेशनार्थं कार्यसिद्धियोगविषये चर्चा करणीया। यदि लग्नेशकार्येशौ लग्नस्थितौ अथवा कार्यभावे स्थितौ वा एकस्मिन् द्रेष्काणे स्थितौ तर्हि कार्यसिद्धिः सम्भवेत्। एतस्मिन् विषये श्रीमन्नारायणदासः अतिविस्ताररूपेण कथितवान् यत् "यदा लग्नेशकार्येशौ कार्यभावे स्थितौ परन्तु बलहीनौ वा पापग्रहणयुक्तौ अथवा शत्रृणावीक्षितौ तर्हि अल्पमात्रे कार्यसिद्धिः भवेत्[5]" इति। अत्र कार्येशस्य विषये आचार्य पद्मप्रभुसूरीणां अभिप्रायः एवमस्ति-

**भावोऽथ कार्यरूपो यस्तदधिपलग्ननाधियौ चिन्त्यौ।**
**वीक्षणयोगौ भावाधिष्ठातारौ पुनश्चिन्त्यौ॥**[6]

अर्थात् प्रश्नकाले यत्कार्यसम्बद्धप्रश्नः पृष्टः तत्कार्यस्य कारकभावाधिपलग्नाधिपौ एव विचिन्तनीयौ इति। तयोः भावयोः स्वाम्योः दृष्टियुक्ती च एवं चिन्त्यौ इति। प्रश्नकाले एतयोः सम्बन्धेनापि कार्यसिद्धिर्भवेत्। विषयस्यास्याधारेण अन्ये केचन कार्यसिद्धियोगविषये उक्तवन्तः सन्ति।प्रश्नशिरिमणौ -

**तनुपस्तनुकार्यनाथान् कृतिपः कार्यवपुर्वपुः पतींश्च।**
**सुविधुस्तनुकार्यपौ च पश्येद्यदि नूनं सकलार्थकार्यसिद्धिः॥**[7]

---

4 (प्रश्नशिरोमणिः.१.१८)

5 (प्रश्नवैष्णवः.१.३०)

6(भुवन दीपक.५९)

7(प्रश्नशिरोमणिः.१.१०)

यदि लग्नेशः, लग्न-कार्य-कार्येशान् तथैव कार्येशः, कार्य-लग्न-लग्नेशान् पश्यति तर्हि कार्यसिद्धिर्भवेत्। एवं प्रकारेण पापग्रहरहितपूर्णचन्द्रः लग्नेशं कार्येशं पश्यति चेत् निश्चयेन सकलार्थकार्यसिद्धिर्भवेत्।

अस्मिन् विषये महाराजशम्भुसिंहः एवमकथयत् यत् यदि कोऽपि योगः अशुभश्चेदपि कार्येशः ग्रहस्य उदयश्चेत् अर्थात् अस्तं न गच्छति तर्हि तस्मिन् काले कार्यसिद्धिर्भवेत्[8] इति। अस्मिन् विषये महाकविकालिदासः बृहत्विचारं कृत्वा एवमकथयत्-

**प्राग्वल्लग्नपकार्ययौ शुभखगौ सुस्थानगौ चेन्मिथो**
**दृष्टौ तौ तु कयाचिदर्कलवतो दृष्ट्याधिकारत्रयात्।**
**भावं भावयति च कारकमपीहलोच्य तत्तादृशं**
**पूर्वोक्तावधितः फलं तु कथयेद्वा मध्यवर्तीवशात्।**[9]

अर्थात् लग्नेशः तथा कार्येशशुभग्रहौ, शुभभावे स्थितौ परस्परं दृष्टौ तथैव दृष्टिः १२ अंशानामन्तः चेत् ज्योतिर्विद् कार्यस्य सफलतां वदेत्।सफलतायाः यावन्मात्रम् उभयोः ग्रहयोः बलं तथा शुभतानुसारेण उक्तमिदं यत् दृष्टिरुत्तमा, मध्यमा अथवा कनिष्ठा च भवति इति। कारकग्रहस्य बलेन साकं विचारमपि कृत्वा फलम् निर्णयम्। यदि उपर्युक्तौ द्वौ ग्रहौ अर्थात् लग्नेशे द्वादशांशतः दृष्टिस्तर्हि तथैव तयोः ग्रहयोः मध्ये अन्य ग्रहः नाम तृतीयग्रहः विद्यमानश्चेत् तस्य तृतीयग्रहस्य प्रकृतिकारकत्वम्

---

[8]असत्स्वपि च योगेषु कार्येशोदयराश्यति।
भविष्यति तदा काले कार्यं ज्ञानप्रदीपके॥ (प्रश्नज्ञानप्रदीप.३०.५)
[9](उत्तर कालामृतम्.७.१९)

इत्यादिविषयान् दृष्ट्वा फलं वक्तव्यम्। पण्डितरुद्रमणिः पुनरेवं वदति यत् लग्नेशकार्येशौ तेषां भावे स्थितौ अथवा कार्येशः लग्ने स्थितः, लग्नेशः कार्यभावे स्थितः अथवा लग्नेशकार्येशौ लग्ने वा कार्यभावे स्तितौ तदा वाञ्छितकार्यसिद्धिः। अस्मिन् विषये दैवज्ञजीवनाथ झा वदति यत् स्वस्वराशिस्थितः लग्नेश एवं कार्याधिपतिः परस्परं दृष्टिपातंकुरुतः चेत् अथवा एतौ द्वौ ग्रहौ पूर्णचन्द्रेण यदि दृष्टौ तदा विना प्रयत्नेन कार्यसिद्धिर्भवेत्। अत्र विषयमेकं ध्यातव्यम् यत् लग्नेशकार्येशयोः पारस्परिकदृष्ट्या एव सप्रयासेन सफलता प्राप्यते। तथैव चन्द्रस्य दृष्टिं विना प्रयासेन अर्थात् आयासेन कार्यसिद्धिर्भवेत्[10]।

विषयममुं पण्डितरुद्रमणिः अपि अङ्गीकरोत्येव। अतः तैरुक्तमस्ति यत् यदि एतेषु योगेषु (पूर्वोक्तप्रश्नशिरोमणिविषये सम्बद्धनाति) कार्येशस्य तथा लग्नेशस्य उपरि चन्द्रस्य दृष्टिस्तर्हि सम्यक् कार्यसिद्धिर्भवेत्। अधुना पण्डितरुद्रमणिः अन्यदैवज्ञानाम् अपेक्षया किञ्चित् अग्रे गत्वा वदति यत् यदि चन्द्रस्य दृष्टिः नास्ति तथैव अन्यस्य कस्यचन शुभग्रहस्य दृष्टिः तर्हि अन्यकार्यसिद्धिः सम्भवेत् नाम वाञ्छितकार्यसिद्धिः न भवेदिति भावः।

**तनुकार्यपचन्द्रतः कम्बूलं यदि सर्वार्थकरं ततश्च दृष्टिः।**
**मिथ इष्टफलर्द्धदं यथेष्टं निजनाथोक्षितमुग्रदृष्टिहीनम्॥**[11]

---

[10](प्रश्नभूषणम्.२.४)

[11](प्रश्नशिरोमणिः.१.११)

अर्थात् लग्नेशकार्येशयोः चन्द्रेण साकं कम्बूलयोगश्चेत् सर्वकार्यसिद्धिर्भवेत् तथैव परस्परदृष्टिः चेत् अथवा स्वस्वामिभिः दृष्टश्चेत् तथा पापग्रहस्य दृष्टिराहित्यञ्चेत् इष्टकार्यसिद्धिर्भवेत्।

कार्यसिद्धियोगस्य प्रस्तावनान्तरम् अग्रिमश्लोकेषु, पूर्वोक्तकार्यस्य कार्यसिद्धिः कदा सम्भवेतित्यस्य विषये चर्च्यते।

प्रश्नशिरोमणिग्रन्थे एवमुक्तमस्ति यत् यदि चन्द्रबृहस्पत्योः इत्थसालयोगे सप्तमेशेन सह स्थितिः भवति चेत् वर्तमानसमये सौख्यं सम्भवेत्। अन्यप्रकारेण तु समयोऽयं कष्टतर एव। अग्रे गत्वा विषयेऽस्मिन् दैवज्ञनीलकण्ठः सविस्तरं कथयति यत् येन ग्रहेण सह लग्नेशस्य इत्थसालयोगः भवति तस्मात् भूतकालिकफलं वक्तव्यम्। येन ग्रहेण सह लग्नेश भवति तस्मात् वर्तमानकालफलं तथैव येन ग्रहेण सह लग्नेशस्य इत्थसालयोगः भवति तस्मात् भविष्यकालस्य विचारः करणीयः।

यदि चरराशौ (मेष-कर्क-तुला-मकर) स्थितश्चेत् स्थिरकर्मणः सिद्धिः तथैव द्विस्वभावराशौ (मिथुन-कन्या-धनु-मीन) स्थितश्चेत् मिश्रितफलयोगः तथैव शुभग्रहैः दृष्टश्चेत् शुभफलसिद्धिः वक्तव्या।अस्मिन्विषये आचार्यभट्टोत्पलः एवं कथयति-

**स्थिरराशौ लग्नगते स्थानप्राप्तिं वदेन्न गमनं च।**
**रोगोपशमं नाशं द्रव्याणाञ्च पराभवं नात्र॥**[12]

अर्थात् प्रश्नलग्ने स्थिरराशिश्चेत् (स्थानप्राप्तिसम्भावित-प्रश्ने) स्थानलाभः, (यात्राप्रश्ने) गमननिरोधः, (रोगोपशमनप्रश्ने)

---

[12](प्रश्नज्ञान.१५)

रोगसमाप्तिः, (नष्टपदार्थप्रश्ने) द्रव्यस्य नाशनं विना तथैव (विजय-पराजयप्रश्ने) विजयः इति वक्तव्यम्।

प्रश्नलग्नस्योपरि चरराशिस्थितश्चेत् उक्तप्रश्नेषु फलानि पूर्वोक्तविपरीतानि(नाम स्थानप्राप्तिर्न, यात्रागमनं, रोगानुवृत्तिः, धनप्रश्ने धनलाभः, विजयसम्बन्धप्रश्ने पराजयः) सम्भवन्ति।

द्विस्वभावलग्नश्चेत् मिश्र (लाभहानिः) फलम् अर्थात् लग्नस्य पूर्वार्धे स्थिरराशिसमानं तथैव उत्तरार्धे चरराशिसमानं चेति मन्तव्यम्।

परन्तु शास्त्रेस्मिन्-प्रश्नफलगणनावसरे विभिन्नरीत्या विचारः क्रियते। यदि लग्नसूर्यचन्द्राः चर-स्थिर-द्विस्वभावराशिगता तर्हि कार्यस्य सिद्धिः असिद्धिः इत्युच्यन्ते, अथापि तस्मिन् समये प्रश्नकर्तुः मानुषस्य किमपि कार्यविषये प्रश्नः भवेत् तत्काले मेष-कर्क इत्यादिषु कोऽपि चरलग्ने वर्तमानश्चेत् तथैव सर्वेषु राशिषु अर्थात् चरराशौ सूर्यः तथैव चन्द्रोऽपि चरराशौ स्थितरश्चेत् तर्हि कार्यसिद्धिः निश्चयेन।[13] यदि पापग्रहदृष्टिश्चेत् अशुभफलमिति मन्तव्यम्।

यदि शुभग्रहकेन्द्र (१, ४, ७, १०) त्रिकोणे (९, ५) स्थिरस्तर्हि कार्यसिद्धिः सम्भवेत्। तथैव पापग्रहाः केवलत्रिषुस्थानेषु (३, ६,११) स्थिताश्चेत् शुभकारक इत्यनुमीयन्ते।आचार्य वराहमिहिरः उक्तवान् यत् प्रश्नलग्ने पापग्रहस्थितरश्चेत् प्रश्नकर्तुः शरीरेरोगस्तथा अन्येन केन कलहोऽपि सञ्जायते। यदि चतुर्थस्थाने पापग्रहस्थितिः तर्हि

---

[13]चरे लग्ने चरे सूर्ये चरराशौ राशी यदा।
तदा सिद्धफलं नूनं वक्तव्यं गणकोत्तमैः॥ (ज्यौतिषप्रश्नफलगणना.१.१)

सुखहानिः, गृहे भग्नसूचकता एवं बन्धुजनैः विरोधः च सम्भाव्यते। सप्तमस्थाने पापग्रहस्थितिश्चेत् यात्रायां बाधा, दशमस्थाने पापग्रहस्थितश्चेत् व्यवसायादि कृषिकार्यनष्टं सम्भवति। एतेषां सर्वेषां योगानाम् उपरि शुभदृष्टिः भवति चेत् अत्यन्तकष्टेन कार्यसिद्धिः भविष्यति[14]।

लग्नं तथा चन्द्रः शुभग्रहेण सह इत्थसाले स्थितः अथवा केन्द्रस्थाने (१, ४, ७, १०) शुभदृष्ट्या पूर्णबलवान् चेत् अथवा केन्द्रात् द्वितीयस्थाने (२, ५, ८, ११) भवति चेत् गुप्तकार्यस्य सिद्धिः भवेत्। तथैव आपोक्लिम्स्थाने (३, ६, ९, १२) स्थिरत्वेन स्थित्वा अशुभग्रहैः सह इत्थसालं करोति चेत् कार्यसिद्धिः न सम्भवति। अमुं योगं सर्वे दैवज्ञाः विना अभिप्रायभेदेन स्वीचक्रुः।

इदानीं कार्यसिद्धियोगस्य अन्तिमभागः उच्यते - अत्र एकः विशेषश्लोकः उक्तः वर्तते - कदाचित् एकस्मिन्नेव समये पृच्छकः प्रश्नद्वयं पृच्छति तदा कस्य कार्यस्य असिद्धिः? कस्य सिद्धिः सम्भवेत् इत्यस्मिन्विषये। पण्डितरुद्रमणिः एकम् अद्भुतमार्गं दर्शितवान् यत् यदि शुभलग्नेशः बलसहितस्सन् केन्द्रगतस्तर्हि पूर्वोक्तकार्यसिद्धिं उच्यते तथैव लग्नेशः अन्यत्र भवति चेत् तत्पूर्वोक्त कार्यस्य सिद्धिः भवेदिति।

ग्रन्थेऽस्मिन् पण्डितरुद्रमणिः आदौ कार्यसिद्धियोगस्य विवरणमददात्। तत्पश्चात् अन्ययोगचर्चामकारोत्। प्रायः ते पण्डिताः अमुं कार्यसिद्धियोगं मुख्यतया अङ्गीकुर्वन्ति। यतः किमपि कर्म तत्

---

[14](दैवज्ञवल्लभा.१४.५,६)

अस्मिन् योगे एव अन्तर्भवति। यथा विद्यारम्भ-विवाह-विदेशगमनादीति।

**युगपद्बहुप्रश्नकरणे विचारः** –

दैवज्ञाः पण्डिताः अवोचन् यत् स्नानं कृत्वा भस्मधारणानन्तरं श्वेतवस्त्रं धृत्वा पूर्वस्यां दिशि मुखं कृत्वोचितासने स्थित्वा सुखपूर्वकम् उपविश्य तथा प्रश्ननिमित्तकविचारं कृत्वा भक्तिपूर्वकं गुरुसंमुखे प्रश्नकालीनकर्तव्यं कुर्यात्। सूर्यः यदि सुप्रसन्नो भवेत्तदा प्रश्नकरणं समुचितं भवेत्।

किञ्च प्रश्नकरणसमये एकवारं एक एव प्रश्नः प्रष्टव्यः इति अनेकप्रश्नाः न प्रष्टव्याः इत्यस्मिन् विषये एवं कथितमस्ति यत् "**संहृत्य दैवगणकान्सकृदेव पृच्छेत्**[15]" इति। अर्थात् पूर्वाभिमुखे उपविश्य प्रणम्य एकवारं एक एव प्रश्नः प्रष्टव्यः, किमर्थमिति चेत् भगवतः विष्णोः समीपे स्वयम्भूब्रह्मणः समीपे एतादृश उपदेशः अस्ति। एवं किमर्थम्इति प्रश्नस्य समाधानं श्रीनीलकण्ठदैवज्ञः एवमकथयत्-

**सम्यग्विचार्य लग्नं ब्रूयात्प्रश्नं सकृद्यथा शास्त्रम्।**
**यस्त्वेकं ब्रूतेऽसौ तस्य न मिथ्या भवेद्वाणी॥**[16]

अर्थात् एकस्मिन् काले एक एव प्रश्नः उचितः। शास्त्रविचारपूर्वकम् एककाले एकस्य प्रश्नस्यैवभविष्यवाणीद्वारा ज्योतिषः वाणी सत्यं करोतीति।

---

[15](केरलप्रश्नशास्त्रसंग्रहः.पूर्वार्द्धम्.८)

[16](ताजीकनीलकण्ठी.प्रश्नप्रकरणम्-पृ.सं.३६१)

परन्तु केचन जनाः अज्ञानवशात् अधिकप्रश्नान् एकस्मिन्नेव समये पृच्छन्ति। तदा कीदृश विचारः करणीय इत्यस्य समाधानं पण्डितरूद्रमणिः प्रश्नशिरोमणिनामके ग्रन्थे एवं प्रादात्। प्रष्ट्रा प्रश्ने पृष्टे सति प्रथमेलग्नात् फलविचारः करणीयः, तथैव द्वितीयप्रश्ने चन्द्रात्, तृतीयप्रश्ने उत्तरसूर्यात्, चतुर्थप्रश्ने बृहस्पतिद्वारा विचारः करणीयः। परन्तु चतुर्थप्रश्ने बृहस्पतिः स्थितभावं, लग्नमिति मत्वा प्रश्नः दर्शनीयः। यदि बृहस्पतिः नीच वा अस्तङ्गतस्तर्हि तत्र कोऽपि वक्रग्रहश्चेत् तस्य भावं लग्नमिति मन्तव्यम्। यदि बृहस्पतिरेव वक्रस्तर्हि तस्य भावमेव लग्नमिति मत्वा प्रश्नः दर्शनीयः। परन्तु तस्मिन् समये अस्तत्व तथा नीचत्वस्य उपरि ध्यानं न देयम्।

ताजिकनीलकण्ठीयनामकग्रन्थे अस्य विषयस्य विचाराः वर्तन्ते। परन्तु तत्र पञ्चप्रश्नानां समाधानप्रकार एव विचारितं वर्तते। किन्तु पण्डितरुद्रमणिः तावत् द्वादशप्रश्नानाम् उत्तराणाञ्च विषयविचारमकरोत्।

**भृगुभौमविदां च पंचमे भं सबलस्यैव न चान्यखेचरस्य।**
**अथ कायचतुर्मदाम्बरस्वैः क्रमतो वात्र वदेत्तनुं मनीषी॥**[17]

यदि पञ्चमप्रश्ने शुक्र-बुध-कुजग्रहेषु यः कोऽपि अधिकबलवान् तर्हि तस्य भावं लग्नमिति मत्वा तथैव षष्ठप्रश्ने तस्य पूर्वोक्त अधिकबलवत् ग्रहात् किञ्चित् न्यूनबलयुक्तग्रहस्य भावं लग्नं मत्वा तथैव सप्तमप्रश्ने तस्य

[17](प्रश्नशिरोमणिः.१.१५)

पूर्वोक्तन्यूनबलयुक्तग्रहेणापि हीनबलग्रहश्चेत् तस्य भावं लग्नमिति मत्वा पृच्छकस्य प्रयोजनं वक्तव्यम्। भावार्थः तु एवं प्रकारेण ज्ञेयः यत् शुक्र-कुज-बुधेति त्रिषु ग्रहेषु सर्वाधिकबलवान् शुक्रः, अस्यापेक्षया किञ्चित् न्यूनबलवान् कुजः तथैव कुजात् हीनबलवान् बुध एव। अतः पञ्चमप्रश्ने शुक्रयुक्तभावमेव लग्नमिति मत्वा पृच्छकस्य प्रयोजनं वक्तव्यम्। तथैव षष्ठप्रश्ने कुजयुक्तभावं तथा सप्तमप्रश्ने बुधयुक्तभावं लग्नमिति मत्वा प्रश्नभाववर्णनं करणीयम्। पुनः अन्यग्रहस्य भावं लग्नमिति मत्वा पञ्चमादि प्रश्नानां नैव उत्तरं वक्तव्यमिति पं. रामदयालुशर्मामहोदयः अभिप्रैति।

परन्तु ममाभिप्रायानुसारेण ग्रहाणां षड्बलाधारेण शुक्र-कुज-बुधग्रहेभ्यः यस्य ग्रहस्य प्रश्नकुण्डल्यां अधिकबलं भवति तस्य प्रथमं तथैव यस्य न्युनबलं भवति तस्य अनन्तरं तथैव सर्वेभ्यः यः बलहीनः स अन्तिमे स्वीकरणीयः। किमर्थमिति चेत् पण्डितरुद्रमणिः चतुर्थप्रश्नस्य विषये विचारकरणसमये बृहस्पतिस्थ भावं लग्नमिति मन्तव्यमित्यकथयत्। परन्तु एवं विधमपि उक्तं वर्तते यत् यदि बृहस्पतिः नीच अथवा अस्तं गतः चेत् तत्र कोऽपि वक्रग्रहः भवति तर्हि तस्य भावं लग्नरूपेण मन्तव्यमित्यवदत्। अनेन आदरेण अत्रापि षड्बलानां विचारः अपि करणीयः।

यदि सप्तग्रहाः सबलाश्चेत् ग्रहः पूर्णबलवान् भवेत्। यदि विनाबलेन शून्यबलवान् भवेत्तर्हि अल्पबलेनअल्पवीर्यवानिति ज्ञेयम्।अष्टमप्रश्नस्य विचारः लग्नभावात् करणीयः। नवमप्रश्नस्य चतुर्थभावात्, दशमप्रश्नस्य सप्तमभावात्, एकादशप्रश्नस्य दशमभावात् तथैव द्वादशप्रश्नस्य द्वितीयभावात् विचारं संपाद्यः।

एतस्मिन् विषये केचनदैवज्ञा एवमवदन्। तेष्वपि प्रधानतया पण्डितरूद्रमणिः तस्मिन् विषये स विस्तारं चर्चामकरोत्। अधुना प्रश्नमार्गात् लग्नज्ञानविधानं विव्रीयते।

**प्रष्टा कीदृश इति विचारः क्रियते -**

**क्षुद्र पाखण्डि धूर्तेषु श्रद्धाहीनोपहासके।**
**नोत्तरं तथ्यतामेति यदि शम्भुः स्वयं वदेत्॥**[18]

अर्थात् प्रश्नकर्ता क्षुद्रः पाखण्डी धूर्तः श्रद्धाहीनः उपहासकरणशीलः चेत् तादृशाय दीयमानं समाधानं नैव सम्यक् भविष्यतीति केरलप्रश्नशास्त्रसङ्ग्रामनामके ग्रन्थे लिखितं वर्तते। यस्य ज्योतिषशास्त्रस्य तथैव प्राचीनज्ञानस्य ऋषिप्रणीतशास्त्रेषु श्रद्धा न भवति तथा सर्वान् उपहासति।तादृशः उत्तरमपि न समीचनतया अधिगच्छति। एतादृशाः केवलं परीक्षणनिमित्तमेव, ज्योतिषशास्त्रम् अपहासं कर्तुमेव आगच्छन्ति। अतः एव पण्डितरुद्रमणिना प्रष्टा कीदृशः भवेदित्यस्य विषये केचन नियमाः विशदीकृताः।

लग्ने चन्द्रः, केन्द्रे (१, ४, ७, १०) शनिः, बुधः अस्तं चेत् तथैव चन्द्रं कुजबुधग्रहौ पूर्णदृष्ट्या पश्यत चेत् प्रष्टा कुटिलो भवेत्।[19]

इतरश्लोकेष्वपि एवं कथितमस्ति यत् लग्ने शुभग्रहश्चेत् सरलं भवति, अन्यग्रहाश्चेत् सरलं नैव भवति। यदि चन्द्र-बृहस्पतिलग्ने स्थित्वा सप्तमस्थानं मित्रदृष्ट्या अन्यग्रहं

---

[18](केरलप्रश्नशास्त्रसंग्रहः.पू.५)

[19](प्रश्नशिरोमणिः १.२१)

वैरिदृष्ट्यास्तर्हि सः प्रष्टा धूर्तो भवेत्। यदि चन्द्रबृहस्पत्योः एकस्मिन् राशौ स्थितस्तर्हि तथाऽपि सरल एव भवेत्। अस्मिन् विषये दैवज्ञनीलकण्ठः एवमकथयत् यत् प्रश्नसमयचेष्टाग्रहस्थितिद्वारा प्रश्नकर्ता सरलो भवेत्। अथवा वञ्चको भवेत्। एवं ज्ञात्वैव दैवज्ञाः शुभाशुभादेशेषु तत्पराः भवेयुः। ज्यौतिषः मनसि सर्वदा दैवात् एव प्रेरणा भवेत्। पृच्छकः अस्ति अथवा नास्तिचेदपि[20]। एवं प्रकारेण प्रश्नकुण्डल्याः विचारकरणसमये प्रथमं यस्मिन् विषये ध्यानं देयमिति प्रथमेऽध्याये सङ्क्षेपेण कथितं वर्तते।

**अवलोकनम्**

अध्यायेऽस्मिन् अष्टविंशतिश्लोकास्सन्ति। तत् तावत् प्रथमं मङ्गलाचरणम् तदनन्तरंकार्यसिद्धियोगः, युगपद्बहु-प्रश्नेविचारः, प्रष्टा कीदृश इति प्रश्ने विचारः, स्थिरादिफलम् इत्यादि विषयाणां विचाराः सङ्क्षेपाध्याये सम्यक् कृताः वर्तन्ते।युगपद्बहुप्रश्नानां विचारणसमये पण्डितरुद्रमणिना अन्येभ्यः आचार्येभ्यः विशेषरूपेण चर्चितमस्ति। तथैव कार्यसिद्धियोगविषये-अन्येषामाचार्याणामपेक्षाया अधिकज्ञानं विस्तारेण प्रदत्तमस्ति।

[20]ऋजुरयमनृजुर्वायं प्रष्टा पूर्वं परीक्ष्य लग्नवलात्।
गणकेन फलं वाच्यं दैवं तच्चित्तगं स्फुरति॥ (ताजीकनीलकण्ठी. प्रश्नप्रकरणम्-पृ.सं.३६०)

## द्वितीयोऽध्यायः

# विशेषोऽध्यायः - प्रथमभागः

**धनलाभप्रश्नः**

प्रश्नशिरोमणिग्रन्थे धनलाभप्रश्नविचारः समग्रतया बहुविस्तारेण कृतः। "**तन्मूलत्वाल्लोकयात्रायाः**[21]" एवं कथने सति अनेन विना लोकयात्रा सुसम्पन्ना न भवेत्, यतः धनशब्दस्य अर्थः न ऐश्वर्यमेव परन्तु विद्या, भूमिः, हिरण्यं, पशुः, धान्यं, पात्रम्, गृहोपकरणं, मित्रजनादरणं, आर्जितवर्धनम् इति। "**विद्याभूमिहिरण्यपशुधान्यभाण्डोपस्करमित्रादीनामार्जितस्य विवर्धनमर्थः**[22]"इति एवं पण्डितरुद्रमणिरपि अङ्गीकरोति। अतः ते पण्डिताः वदन्ति यत् अर्थपदस्यार्थः धनम् इति मात्रं न अपितु अन्यवस्तुलाभप्राप्तिरपि भवति इति।

"**यद्भावावस्थौ लग्नवित्तेश्वरौ चेत्तन्मूलात्तु द्रव्यवृत्ति नराणाम्**[23]"अर्थात् यस्मिन् भावे लग्नेशः तथा धनभावस्थितिः भवति तत्र तस्य मनुष्यस्य जीवनाधारः स्पष्टो भवति। अमुमेव विषयम् आधाररूपेण अङ्गीकुर्वन् पण्डितरुद्रमणिः एवमवोचत् यत् धनेशः चन्द्रेण अथवा लग्नेशेन सह स्वस्थाने अथवा उच्चस्थाने वा स्थितः तथैव शुभग्रहैः दृष्टश्चेत् सः अतिशीघ्रसमये धनदाता भवतीति पण्डितरुद्रमणेः वचनम्। अत्र शुभग्रहस्य दृष्टिफलम् उक्तम्। परन्तु

---

[21] (कामसूत्रम्.1.2.15)

[22](कामसूत्रम्.1.2.9)

[23](सप्त ऋषि नाड़ी.18)

ताजीकनीलकण्ठीये अस्य योगविषये पापग्रहदृष्टिश्चेत् जायमानफलविषये लिखितमस्ति यथा धनेशस्य लग्नेश अथवा चन्द्रेण सह इत्थशालयोगेन, शुभग्रहेण योगः दूरदेशागमनद्वारा धनप्राप्तिः सम्भवति। तथैव अनिष्टफलस्यापि सम्भावना भवति[24]।

प्रश्नचण्डेश्वरग्रन्थे महर्षिः अभयकात्यायनः चन्द्रमुद्दिश्य धनलाभकथने एवमुवाच -

**चन्द्रो लग्नपतिर्वापि धनस्थानगतो यदि।**
**तदा तु धनलाभः स्याद्विपरीतो ह्यलाभकृत्॥** [25]

अर्थात् यदि चन्द्र अथवा लग्नेशः द्वितीयभावे स्थिते तदा धनलाभस्य प्रश्ने निश्चयरूपेण धनलाभ एव। यदि एतेषां स्थितिः द्वितीयभावं विहाय अन्यत्र तर्हि धनहीनता भवेत्। परन्तु पण्डितरुद्रमणेः अभिप्रायः अस्ति यत् केवलं द्वितीयभावे एव न अपि तु नवमपञ्चमे तथैव लग्ने स्थितश्चेदपि धनलाभ एव भवेत्। विषयोयं तैरेवं प्रतिपादितं - यदि धनेशलग्नेशौ तथैव चन्द्रनवमे पञ्चमे, द्वितीये तथैव लग्ने स्थिताः, परस्परं एकत्रैव भवन्ति, परस्परं वीक्षन्ते तर्हि अधिकधनप्राप्तिः भविष्यति। परन्तु श्रीनीलकण्ठदैवज्ञानाम् अभिप्रायः अस्ति यत् केवलं द्वितीये, नवमे, पञ्चमे तथा लग्ने एव न अपितु चतुर्थे, सप्तमे तथा दशमभावेऽपि धनलाभः भविष्यति। अस्मिन् विषये तेषां कथनानुसारेण

---

[24]धनधनपेत्थशाले मन्दगतिर्यत्र भावनाम्।
तनुधनसहजादीनां प्रष्दुस्तद्वारतो लाभः॥ (ताजीकनीलकण्ठी.प्रश्नतन्त्रम्-पृ.सं.369)

[25](प्रश्नचण्डेश्वरः.2.9)

लग्नचन्द्रधनेशानां त्रयाणां दृष्टिः एकस्य अन्यस्योपरि अथवा परस्परयुक्तरूपेण, तथैव लग्ने, द्वितीये, चतुर्थे, पञ्चमे, सप्तमे, नवमे, दशमे इत्येतेषु स्थानेषु क्वचित् एकस्मिन् स्थाने तिष्ठति चेत् शीघ्ररूपेण धनलाभः भवति[26]।

पण्डितरुद्रमणिः स्वस्यग्रन्थे धनलाभप्रश्नविषये तृतीयश्लोके एव अवोचत्-----

**तनौ शुभः सुतगैः स्वतुङ्गखेटैर्भवगृहगोच्चभृगौ पुरादिलाभः।**
**स्वगृहे तनु पतिस्तनौ स्वपत्या परिदृष्टो नृपतेःस्वलाभदश्चेत्॥**[27]

अर्थात्

१. लग्ने शुभग्रहस्थितिः तथैव पञ्चमे उच्चग्रहः, द्वादशभावे उच्चशुक्रः तिष्ठति तर्हि गृह, पुर इत्यादि लाभप्राप्तिः भविष्यति।

२. लग्नेशः स्वगृहे तिष्ठति तथा लग्नं स्वामिना दृष्टं चेत् राजभ्यः धनप्राप्तिर्भविष्यति।

अस्मिन् श्लोके योगद्वयमुक्तं वर्तते -

१. एकादशभावे उच्चस्थानगतशुक्रः स्थितः अर्थात् शुक्रः मीनराशौ भवतीत्यर्थः। तस्मात् वृषभराशिलग्नमिति भाव्यते। तथैव लग्नात् पञ्चमस्थाने कन्याराशिः भवेत्। कन्याराशौ केवलं बुध एव उच्चस्थानं प्राप्स्यतीत्यर्थः। तदा लग्ने शुभग्रहः भवितव्यः। तथा चेत्

[26](ताजीकनीलकण्ठी.प्रश्नतन्त्र.प्रत्येकभावनिरूपणं. 8)

[27](प्रश्नशिरोमणिः.2.धनलाभः.3)

केवलं गुरुः शुभचन्द्राः एव भवितुमर्हन्ति। तथा चेत् अस्य योगकुण्डली एवं भवति-

**चक्रम् – २.१**

| शुक्रः | | //चन्द्र/गुरुः | |
|---|---|---|---|
| | **पुरादिलाभयोगः** | | |
| | | | |
| | | | बुधः |

२. लग्नेशः स्वगृहे स्थित्वा लग्नं पश्यति चेत् केवलं एकस्मिन् प्रदेशे एव सम्भवति। तदा वृश्चिकलग्नं तथैव तस्याधिपतिः कुजः मेषराशिं, अष्टमदृष्ट्या पश्यति चेत् तथैव योगः सम्भवति।

**चक्रम् – २.२**

| | कुजः | | |
|---|---|---|---|
| | **राजेभ्यः जनप्राप्तियोगम्** | | |
| | | | |
| | // | | |

अस्य योगसम्बन्धितान्ययोगाः बृहत्पाराशरहोराशास्त्रे एवं कथिताः वर्तन्ते -

**भौमक्षेत्रे गते लग्ने तस्मिन् भौमेन संयुते।**
**सौम्यशुक्रार्कजैर्युक्ते दृष्टे श्रीमान्नरो भवेत्॥**[28]

---

[28](बृहत्पाराशरहोराशास्त्रम्.42.11)

अर्थात् भौमक्षेत्रगत (मेष, वृश्चिक) लग्नः तथैव तस्मिन् भौमस्थितः तथा लग्ने बुध-शुक्र-शनिग्रहैः युक्तः, दृष्टस्तर्हि जातकः धनवान् भविष्यति।

पण्डितरुद्रमणिः धनलाभप्रश्नविषये अग्रे एवं कथयति यत् यदि लग्ने धनेशचतुर्थेशौ शुभग्रहयुक्तौ, शुभग्रहैः दृष्टौतर्हि तथैव पापग्रहैः अदृष्टश्चेत् धनदर्शनं भवेत्। यदि लग्नेशः लग्ने तथैव चन्द्रः लाभेशयुक्तः एकादशभावे स्थितस्तर्हि सुखपूर्वकधनलाभप्राप्तिः भवति। लग्नेशस्य तथा धनेशस्य नक्तयोगश्चेत् पृच्छकस्य धनलाभः भविष्यति। तथैव यमयायोगश्चेदपि धनलाभः भविष्यति। यदि लग्नेशधनेशौ पापग्रहैः पीडितौ तर्हि धनलाभो नैव।

प्रश्नशिरोमणिग्रन्थे अन्ययोगविषये एवं कथितमस्ति यत् पूर्णचन्द्रः पुष्ट भूत्वा स्वोच्चराशौ स्थितः, पापग्रहैः अदृष्टस्तथैव शुभग्रहयुक्तः अथवा तैर्दृष्टश्चेत् पृथ्वी, गृह, धनलाभप्राप्तिः भवेत्।

पूर्णचन्द्रः इति उक्तस्यार्थाः पूर्णिमायाः दिने चन्द्रः इत्यस्मिन् विषये सूर्यसिद्धान्तानुसारेण एवं कथितं वर्तते यत् "**सूर्येन्दू पौर्णमास्यन्ते भार्धे भागादिभिः समौ**[29]"इति अर्थात् प्रतितिथि सूर्यचन्द्रयोरन्तरंद्वादशभागयुतम्। अतो पूर्णिमान्ते द्वादशगुणाः पञ्चदश १५ ×१२° - १८०° राशिषट्कमतः पूर्णान्ते सूर्यचन्द्रस्थान-योरन्तरं केवलं राशिषट्कं भवति। तथा प्रश्नकुण्डली एवं भवति–

[29](सूर्यसिद्धान्तः.4.7)

**चक्रम् – २.३**

| | | | |
|---|---|---|---|
| | | **चन्द्रः** | |
| | **पूर्णिमादिने सूर्यचन्द्रयोः स्थितिः** | | |
| | | | |
| | **सूर्यः** | | |

अस्यां कुण्डल्यां चन्द्रः स्वोच्चस्थाने, वृषभराशौ भवति। यदि एषः पूर्णिमायाः चन्द्रस्तर्हि सूर्यः प्रायशः १८०° भवति। सूर्यः पापग्रहः भवति तदा सः सप्तमस्थाने स्थित्वा पूर्णदृष्ट्या पश्यति चेत् पण्डितरुद्रमणेः कथनानुसारेण एषः योगः असाध्यो भवेत्। किन्तु प्रश्नवैष्णवनामकग्रन्थे टीकाकारः आचार्यगुरुप्रसादगौडः एवं वदति यत् शुक्लपक्षस्य दशमीतः कृष्णपक्षस्य पञ्चमीपर्यन्तं चन्द्रः पूर्णो भवेदिति। शेषदिनेषु क्षीणचन्द्रमा भवति[30]। अतः यदीदं प्रमाणमिति अङ्गीक्रियते तर्हि प्रश्नशिरोमणिग्रन्थे उक्तयोगः असम्भव एव।

पण्डितरुद्रमणिः कथयति यत् शुक्रबृहस्पतिबुधग्रहेषु कोऽपि लग्ने, नवमे, पञ्चमे, द्वितीयस्थानेषु तिष्ठति अथवा चतुर्थे उच्चस्थानं भवति तर्हि शीघ्ररूपेण धनलाभः सम्पद्यते। योगोऽयम् अन्यप्रधानग्रन्थेषु नैव दृश्यते परन्तु आचार्यबादरायणेन विरचित प्रश्नविद्याग्रन्थे एवं कथितं यत् -

---

[30](प्रश्नवैष्णवः.2.11)

**वृद्धिविजयार्थं च करोति वा मैत्रीं समानयति कार्यम्।**
**यद्वा लाभमर्थादिकानां जयमभ्युदयम् ॥**[31]

अर्थात् प्रश्नकाले लग्ने अथवा केन्द्रे कोऽपि ग्रहः सूर्यशनिकुजानां दृष्टिरहितः, स्वमित्र उच्च अथवा त्रिकोणराशौ भवेत्तर्हि पृच्छकस्य वृद्धिः, विजयः, धनं, मित्रता, उन्नति अथवा कार्यसिद्धिः भवेत्। तेनैव सह नष्टवस्तुनः लाभोऽपि सम्भवेत्। परन्तु ताजिकनीलकण्ठीये ग्रन्थे एवमुक्तं वर्तते यत् "**प्रष्टुः सद्योऽर्थलाभः स्याल्लग्ने वा सुरमंत्रिणि**[32]" अस्यार्थः एवं भवति यत् केवलं लग्नगतबृहस्पतौ अपि धनप्राप्तिःभवेत्।

बृहस्पति -शुक्र-बुधेषु एकोऽपि ग्रहः बलवान् नाम पुष्टः भूत्वा एकादशस्थचन्द्रेण दृष्टश्चेत् अधिकद्रव्यलाभः भवत्येव। प्रश्नचण्डेश्वरनामके ग्रन्थे उक्तं वर्तते यत् यदि एकादशेशस्य प्रश्नलग्नस्य उपरि दृष्टिश्चेत्तथा लाभस्थाने चन्द्र-बुध-गुरूणां ग्रहाणाम् उपस्थितिश्चेदपि धनलाभः भवत्येवेति[33]। प्रश्नशिरोमणि-ग्रन्थे लिखितं यत् यदि शुभग्रहः केन्द्रे (१, ४, ७, १०) तर्हि शीघ्ररूपेण धनलाभः। केन्द्रे (१, ४, ७, १०) त्रिकोणे (५, ९) आये (११) पापग्रहस्थितश्चेत् विना अधिकारेण धनहानिर्भवेत्। परन्तु अस्मिन् विषये आचार्यबादरायाणमतं वर्तते यथा -

---

[31](प्रश्नविद्या.57 )

[32] (ताजीकनीलकण्ठी.पश्नतन्त्र-प्रत्येकभावनिरूपणं. 12)

[33]लग्ने लाभेशसन्दृष्टे लाभे शुक्रो गुरुर्विधुः।
लाभो भवति भाग्ये वा धने वा चन्द्रयोगतः॥(प्रश्नचण्डेश्वरः.2.11)

**शुभयोरुदयास्तगयोर्दशमायतृतीयगेषु पापेषु।**
**प्रणमन्ति शत्रुसङ्घाः लभते ना सारमर्थस्य॥** [34]

अर्थात् प्रश्नलग्ने सप्तमे तथा प्रथमस्थाने द्वौ शुभग्रहौ (गुरु, शुक्र) स्तः तथैव ३, १०, ११ स्थानेषु पापग्रहाः (सूर्यः, शनिः, कुजः) भवन्ति चेत् समस्तशतृजनाः मानवं प्रणमन्ति। तथैव मनुष्याय श्रेष्ठधनसम्पत्तिरपि लभ्यते। अत्र पण्डितरुद्रमणिरपि दशमस्थानगतक्रूरग्रहस्य फलमेव अकथयत्, तथैव आचार्यबादरायणोऽपि दशमस्थ पापग्रहास्य फलमेव अकथयत्। परन्तु उभयोर्मध्ये अन्तरं भवति। अतः उभयोः अभिप्रायः अधः प्रदर्शितो वर्तते।

प्रश्नशिरोमणिग्रन्थानुसारेण शुभग्रहैः दृष्टः अथवा युक्तः, लाभेशः धनस्थाने युक्तः, लग्नेशेन सह इत्थसालयोगं करोति तर्हि सर्वप्रकारधनप्राप्तिर्भवेत्। यदि नवमभावे शुभग्रहैः दृष्टः अथवा युक्तस्तर्हि निजनाथेनापि दृष्टश्चेत् चिन्तितवस्तुलाभः भवेत्। शुभग्रहैः दृष्टः लाभेशः कस्मिन्नपि भावे स्थिररूपेण स्थित्वा लग्नेशेन, धनेशेन साकम् इत्थसालं करोति चेत् तस्मिन्नेव भावसहितजनेभ्यः धनलाभः सम्भाव्यते। यथा माता-पिता-भ्राता, स्त्री इत्यादि भावे स्थितस्तर्हि तेभ्यः एव धनलाभः वक्तव्यः तथैव अष्टमभावे स्थितः चेत् युद्धं, कोलाहलं, बन्धनं तथैव एकादशभावे स्थितः चेत् मित्रता, द्वादशभावे स्थितश्चेत् व्ययकरणेन द्रव्यलाभः भवेत्।

---

[34](प्रश्नविद्या.62)

**वाटिकाक्षेत्रादि लाभप्रश्नः -**

वेदेषु अन्तिमे महिमां विवृण्वन् एवमुक्तमासीत् – **अन्नाद्वै प्रजाः प्रजायन्ते। याः काश्च पृथिवीश्रिताः। अथो अन्नेनैव जीवन्ति। अथैनदपि यत्न्यन्ततः॥**[35] अस्यार्थः भवति यत् अन्नादेव प्रजाः उत्पन्नाः भवन्ति। यः कोऽपि जीवः भूलोके जीवनं करोति स अन्नद्वारैव जीवितुं प्रभवति। अन्नेन जीवनं कृत्वा तस्मिन्नेव लीनो भविष्यति। एवं महत्वपूर्णरूपेण विराजमानस्य अन्नस्य उद्भवविषये ज्ञानार्थं पण्डितरुद्रमणिः तस्य सम्बद्धविषयान् प्रश्नशिरोमणिग्रन्थे सम्यक् प्रत्यपादयत्।

प्रश्नवैष्णवग्रन्थे **"षष्ठेश्वरे लग्नगते पशुप्रदः"**[36] इत्युक्तमस्ति। परन्तु प्रश्नशिरोमणिग्रन्थे अमुम् योगं महत्वपूर्णरूपेण बहुविस्तृतं वर्णितम् दृश्यते।

**तनौ वारिभे सौम्यखेटैश्च केन्द्रे विपापैः स्वभोच्चादिगैः सद्युतीक्षे।**
**दधानैः सुखंकर्षकस्यान्नलाभोयदाङ्गे खलोनाप्तिरल्पासबाधम्॥**[37]

अर्थात् लग्न अथवा षष्ठभावे शुभग्रहः प्रापग्रहरहितः सन् केन्द्रे स्थित्वा स्वोच्चादिराशिगतस्तथा शुभग्रहयुक्त अथवा दृष्टश्चेत् कृषीवलानां सुखपूर्वकम् अन्नलाभः भवेत्। यदि लग्ने पापग्रहः स्थितस्तर्हि प्राप्तिः नैव भवेत्। भवति चेदपि बाधसहिताल्पमात्रमेव सम्पद्यते तथैव राजभिः, चोरजनैश्च हानिः सम्भाव्यते।

---

[35](तैत्तिरीयोपनिषद्.2.2.1)

[36] (प्रश्नवैष्णवः.10.3)

[37](प्रश्नशिरोमणिः.2.वाटिका.1)

यदि चतुर्थभावे क्रूरग्रहः स्थितस्तर्हि राजभ्यः चोरेभ्यः वा भयेन क्षेत्रं त्यक्त्वा स पलायति। यदि सप्तमगृहे पापग्रहस्तर्हि वर्षाभावेन अन्नादिकं शुष्कं तथैव किञ्चित् अवशिष्यतेऽपि तत् राजापहृतं भवेत्। अथवा शतृत्वं, चोरैः अपह्रीयेत्। यदि दशमेशः दशमे वा सप्तमभावे शुभग्रहयुक्तः तथैव दृष्टस्तर्हि वाटिका क्षेत्रादीनां शीघ्रगतिसिद्धिर्भवेत्। यदि दशमेशः शुभग्रहश्चेत् तथैव वक्रग्रहयुक्तः अथवा स्वयमेव वक्रस्तर्हि वृक्षक्षेत्रनाशो भवेत्। यदि दशमेशः न वक्री भूत्वा अस्तो भवति तर्हि पुरातनवृक्षः सम्यक् रक्षेत्। तथैव लग्ने दाशमेश स्थितः चेत् बालवृक्षो सम्यक् वृद्धिं प्राप्नोति, अर्थात् फलदायकश्चसिपद्यते। तथैव चरलग्नः दशमेशेन दृष्टश्चेत् वृक्षानां नाशो भवेत्।

वाटिकाक्षेत्रादिलाभहानिविषये अत्यधिकविस्तरेण पण्डितरुद्रमणिना उक्ते सत्यपि जनेभ्यः स्वर्णं, रजतं, रत्नादि आभूषणानि, वस्त्रैः परिपूर्णानि वस्तूनि सन्त्यपि अन्नदातुः कृषकस्यैव महत्वपूर्णतेत्यतः तमेव प्रार्थयन्ति[38]। अथ भूभाटकप्रश्नविचारः क्रियते।

**भूभाटकप्रश्नः -**

कृषिपूर्णज्ञेन पराशरमहर्षिणाकथितं यत् क्षेत्रकार्यं क्षेत्रस्वामिना एव स्वयं क्रियते तर्हि सुवर्णं प्राप्यते। तथैव क्षेत्रकार्यं न सम्यक् करोति चेत् कृषिकाय दारिद्र्यं सम्पद्यते।

---

[38]सुवर्णरौप्यमाणिक्यवसनैरपि पूरिताः।
तथापि प्रार्थयन्त्येव कृषकान् भक्ततृष्णया॥ (कृषिपराशरः.4)

**फलत्यवेक्षिता स्वर्णं दैन्यं सैवानवेक्षिता।**

**कृषिः कृषिपुराणज्ञ इत्युवाच पराशरः॥**[39]

एवं प्रकारेण विज्ञाने सत्यपि जनाः स्वक्षेत्रकार्यम् अन्यजनहस्ते ददति स्म। अनेन अस्य किमपि अनिवार्यता स्यात्। तत्र तु प्रधानकारणं भवति आर्थिककष्टम्। तथा दत्ते क्षेत्रे कदाचित् लाभो कदाचित् हानिः सञ्जायते। एतस्मिन् विषये पण्डितरुद्रमणिः कथयति यत् - **तन्वम्बुखास्तेषु शुभैधनाप्तिर्भभूभाटकदत्र खलेन चैव॥**[40]इति अर्थात् यदि लग्नस्य चतुर्थे, सप्तमे, दशमभावेषु शुभग्रहः भवति तर्हि भूभाटकात् धनप्राप्तिर्भवेत्। तथैव यदि पापग्रहः भवति तर्हि धनप्राप्तिर्नैवभवेत्। अस्मिन् विषये ताजिकनीलकण्ठीये ग्रन्थे विस्तृतरूपेण विवरणं दत्तमस्ति यथा लग्नः, लग्नेशस्य उपरि शुभग्रहदृष्टिस्तर्हि भाटकं लभेत्। पापग्रहदृष्टिश्चेत् भाटकप्रापणे सन्देह एव। सप्तमगतपापग्रहयोगात् भाटकदातुः एव हानिः तथैव दशमगतपापग्रहयोगात् प्रश्नकर्तुः लाभदायी स्थिति नैव भवेत्। चतुर्थगतपापग्रहात् अन्तिमचरणे कृषिकः लाभात् वञ्छितो भवेत्।[41]एवं भूभाटकप्रश्नविचारानन्तरम् इदानीं व्ययप्रश्नविचारः क्रियते।

**निधिवस्तुसिंहादिसंशयप्रश्नः -**

महाभारते युधिष्ठिरेण अश्वमेधयागकरणसमये यदा धनस्य आवश्यकता आसीत् तदा श्रीकृष्णद्वैपायनेन सूचितमार्गेण

---

[39](कृषिपराशरः.79)

[40](प्रश्नशिरोमणिः.2.भूभाटकप्रश्न.1)

[41](ताजीकनीलकण्ठी.प्रश्नतन्त्र.प्रत्येकभावप्रश्ननिरूपणं 22, 23, 24)

हिमालयपर्वते निधिः लब्धमासीत्। तदाधारितश्लोकोऽयं अधः लिख्यते। -

**प्रीतिमान् स कुरुश्रेष्ठः खानयामास तद् धनम्।**
**ततः पात्रीः सकरका बहुरूपा मनोरमाः॥ [42]**

अर्थात् कुरुश्रेष्ठः राजा युधिष्ठिरः अधिकप्रसन्नरूपेण धनं खनयामास। क्षणानन्तरमेव तत्र अनेकप्रकारकविचित्रमनोरमा सहस्राधिकसङ्ख्याकसुवर्णपात्राण्यलभन्। एवं प्रकारेण भूम्यन्तरभागे अस्मद् पूर्वजैः संरक्षिताधिकधनसम्पत्तिः गोप्यरूपेण स्थापितं वर्तते। अद्यापि जनाः केचन तद्धनं प्राप्तुं प्रयत्नं कुर्वन्तः,उपलभन्तः च वर्तन्ते। अस्मिन् विषये पण्डितरुद्रमणिः कांश्चित् योगान् अवदत्। यथा -केन्द्रस्थ (१, ४, ७, १०) लग्नेशः शुभग्रहेण सह इत्थसालं करोति चेत् तत्स्थाने धनलाभः भवेत्। यदि शुभ तथा पापग्रहयुक्तलग्नेशः केन्द्रे स्थितस्तर्हि अन्यजनाः खनित्वा धनमपनयन्ति। प्रश्नशिरोमणिग्रन्थे लग्नाधिपतिः शुभाशुभग्रहैः युक्तश्चेत् कीदृशं फलं लभेत्? तथैव बृहद्वारस्तुमलायां चन्द्रस्य शुभाशुभग्रहैः योगश्चेत् जायमानं फलं किं भवेदित्ययं विचारः कृतः वर्तते।

**शुभक्षेत्रगते चन्द्रे द्रव्यालाभो न संशयः।**
**पापक्षेत्रे न लाभः स्याद्ज्ञातव्यं दैवविद्वरैः॥ [43]**

---

[42](महाभारतम्.अश्वमेधपर्व.65.13, 14)

[43](बृहद्वास्तुमाला.1.194)

अर्थात् शुभग्रहस्य गृहे चन्द्रस्थितश्चेत् अवश्यं धनलाभो भवेत्तथा पापक्षेत्रे चन्द्रस्थितश्चेत् कथञ्चित् धनप्राप्तिर्नभवेदिति ज्योतिर्विदामभिप्रायः।

प्रश्नशिरोमणिमनुसृत्य लग्नेशः उत चन्द्रः लग्ने स्थितः दशमस्थग्रहेण इत्थसालं करोति चेत् धनप्राप्तिः भवेत्। चन्द्रलग्नेशौ इत्थसाले स्थितौ तथा केन्द्रे पापग्रहाभावश्चेत् निधिखनने अधिकधनं लभ्यतेति पण्डितरुद्रमणेः अभिप्रायः। एवं प्रकारेण पूर्वोक्तस्थाने सिंहः भवति वा न वा इति अस्य प्रश्नस्य विचारः करणीयः।

यदि शुभग्रहेण साकम् इत्थसालं कुर्वान् पूर्णचन्द्रः द्वितीये, एकादशे, लग्ने, चतुर्थे, सप्तमे, दशमभावे स्थितस्तर्हि भूरिधनं प्राप्यते। यदि लग्नस्य चतुर्थे, सप्तमे, दशमभावेषु बलवान् चन्द्रो भवेत्तर्हि क्रमेण इन्द्रचन्द्रयमवरुनां दिक्षु अर्थात् पूर्वोत्तरपश्चिमदक्षिणदिशासु वस्तु भवेदिति कथितं वर्तते।

**पुष्टे चन्द्रे भवेन्मुद्रा क्षीणे चन्द्रेऽल्पको निधिः।**[44] अर्थात् चन्द्रो बलवान् चेत् अधिकद्रव्यलाभः तथैव बलहीनश्चेत् स्वल्पधनलाभः भवेत्। प्रश्नशिरोमणिग्रन्थानुसारेण यदि चन्द्रः पापग्रहेण सह इत्थसालयोगं कुर्वन् पापग्रहेण केन्द्रे स्थितस्तथैव पापग्रहः १, ४, ७, १०, ८ स्थानेषु स्थितस्तर्हि तस्मिन् स्थाने स्थितस्य जनस्य अधिकधनप्राप्तिर्भवेत्। यदि खननसमये भयं जायते तर्हि यावन्तः ग्रहाः चतुर्थभावे तिष्ठन्ति तावन्निधिः प्राप्यते। चन्द्रात्

[44](बृहद्वास्तुमाला.1.195)

चतुर्थेशः यावत् अंशोकरस्य दूरं गच्छति तावद्धस्तप्रमाणं खननेन उपलब्धम् भवेत्।

प्रश्नज्ञानप्रदीपग्रन्थे उक्तं वर्तते यत् "भुक्त राशयंशमानेन भूमानं कोविकैः करैः।[45]अर्थात् यस्य ग्रहस्य राशौ चन्द्रः स्थितः तस्यैव ग्रहस्य धातोः निर्मितपात्रे निधिः रक्षितः भवति। यथा सूर्यस्य सुवर्णम्, चन्द्रस्य मौक्तिकं, कुजस्य ताम्रं, बुधस्य कञ्चुकं, बृहस्पतेः रत्नं, शुक्रस्य कांस्यं, शनेः लोहं द्रव्यं भवति। अधुना तानि द्रव्याणि कीयत् दूरे वर्तन्ते कीयत् पर्यन्तं खननीयमित्यस्मिन् विषये एवमुक्तं वर्तते। -

**इन्दुलग्नेशयोस्तुर्येट् यावदंशान्तरी ततः।**
**खातहस्ता निधेर्वाच्या एवं सिंहादिकान्तरम्॥**[46]

अर्थात् चन्द्र तथैव लग्नेशात् चतुर्थेशस्य यावदंशानामन्तरं भवेत्तावत् हस्तपर्यन्ता भूमिः द्रव्यार्थं खननीया। एवं प्रकारेण सिंहादीनामन्तरं विज्ञेयम्। तथैव मेषस्य चन्द्रात् गतराशीनां द्विगुणं कृत्वा पूर्णाङ्के तृतीयभागग्रहणे सति लभ्यमानपूर्वाधिकक्रमेण चोरितं, नष्टजातवस्तुनः तथैव सिंहराशेः निधेः दिशा ज्ञानं भवति।

**क्रय-विक्रयप्रश्नः -**

**क्रेता लग्नपतिर्लाभपतिर्विक्रयकारकः।**
**तनौ बलिनि सङ्ग्राह्य विक्रेतव्यं तथा भवेत्॥** [47]

---

[45] (प्रश्नज्ञानप्रदीप.अहचक्रज्ञानं.20)

[46](प्रश्नशिरोमणिः.2.निधिवस्तुसिंहादिसंशयप्रश्नेविचारः.6)

[47](प्रश्नशिरोमणिः.2.क्रयविक्रय.1)

अर्थात् लग्नेशः क्रेता तथैव एकादशेशः विक्रेता भवति। लग्नो बलवान् भवेत्तर्हि क्रेता उत्तमो भवेत्। विषयममुं दैवज्ञजीवनाथोऽपि अङ्गीकरोति।[48]परन्तु श्रीनीलकण्ठदैवज्ञस्य अभिप्रायः अस्मात् भिन्नः भवति। यथा लग्नेशः क्रेता, धनेशो वा लाभेशो वा विक्रेता भवेत्। "**क्रेता लग्नपतिर्ज्ञेयो विक्रेताग्रहपतिः स्मृतः**"।[49] एते भावद्वयं प्रत्यपादयन्। तथापि द्वादशभाव एव विक्रेतुः इत्यङ्गीकुर्वन्त्येव।

अस्मिन्विषये पण्डितरुद्रमणिः अनेकयोगान् अवदत्। यदि लग्नेशसप्तमेशयोः इत्थसालं भवति तर्हि स्वयमेव क्रय-विक्रयकार्यम् उत्तमं भवेत्। तथैव मित्रदृष्ट्या उभयोः इत्थसालं भवेत्तथा लग्नेशसप्तमेशौ मकरराशिगतौ तर्हि अन्यपुरुषद्वारा क्रय-विक्रयकार्यं शुभं भवति। यदि लग्नेशसप्तमेशयोः उभयोः परस्परं मित्रता भवेत्तर्हि मित्रेण साकं क्रय-विक्रयकार्यं शुभप्रदं भवेत्। यदि चतुर्थेश तथा लग्नेशौ मित्रदृष्टियुक्तौ तर्हि विक्रयः मित्रेण सह भूरिधनदायको भवेत्। एवं प्रकारेण चतुर्थेशसप्तमेशौ मित्रदृष्टियुक्तौ तदा विक्रयजनः मित्रेण सह सुखदायको भवेत्। अस्मिन् विषये प्रश्नभूषणग्रन्थे एवं वर्तते -

**विबले लग्नपे प्रश्ने वस्तुस्वामिबलेन तु।**
**विज्ञेयमत्र लग्नस्य बलं तदनुसारतः॥**[50]

---

[48] (प्रश्नभूषणम्.15.1)

[49]( ताजीकनीलकण्ठी.प्रश्नतन्त्र.183)

[50](प्रश्नभूषणम्.15.6)

अर्थात् क्रयविक्रयसम्बन्धप्रश्ने लग्नस्य स्वामी यदि निर्बलः तर्हि वक्ष्यमाणपदार्थानाम् अधिपतिग्रहानुसारेण लग्नस्य बलं ज्ञेयम् भवति।

प्रश्नशिरोमणिग्रन्थानुसारेण यदि लग्नेशः सप्तमभावे भवति तर्हि क्रेता नियतवस्तु अर्थयति। सप्तमेशः लग्नगतश्चेत् विक्रेता नियतवस्तु अर्थयति। लग्नेशः शुभग्रहश्चेत् क्रेता अमृतसमान-मधुरवाक्यभाषणे रतो भवेत्। सप्तमाधिपतिः शुभग्रहश्चेत् विक्रेता अमृतसमानमधुरभाषी भवेत्। यदा चन्द्रः मुत्थशिला चेत् तस्मिन् काले क्रेतव्यम् तथैव यदा चन्द्र इसराफः तदा विक्रेतव्यञ्च।

प्रश्नशिरोमणिग्रन्थानुसारेण येन ग्रहेण सह चन्द्रस्य इसराफयोगो भवति, स ग्रहः सूर्येण साकम् अस्तं गच्छति तर्हि अन्यस्मै दीयते, तस्य वस्तुनः विक्रेता आपणं त्यक्त्वा नाशः प्राप्नोति। एवं प्रकारेण क्रयविक्रयप्रश्नस्य विचारः करणीयः।

**प्रष्टुः आयुविचारः -**

अर्कादिग्रहाणां वर्णनात्पूर्वं पण्डितरुद्रमणिः प्रश्नकर्तुः कीयदायुः अवशिष्टं भवति तथैव कीयदायुः विगतमित्यस्मिन् विषये विचारं करोति। यतः समस्तविचारेषु आयुः मुख्यम् इति ज्योतिश्शास्त्रे उल्लिखितं वर्तते।

**पूर्वमायुः परीक्ष्यैव पश्चाल्लक्षणमादिशेत्।**
**नीचलक्षणज्ञानेन आयुषा व्यर्थमाप्नुयात्॥**[51]

---

[51](शिवजातकः.6)

सर्वप्रथमम् आयुर्विचारकरणानन्तरमेव शुभाशुभलक्षणं वक्तव्यम्। नीचलक्षणज्ञानात् अर्थात् न्यूनायुषा सर्वफलविचारस्य उद्योगकरणं व्यर्थमेव। अत एव प्रश्नशिरोमणिग्रन्थे एवमुक्तमस्ति-

**यावल्लवैर्लग्नप एति चन्द्रं तावत्समादायमितैर्हि शिष्टाः।**
**यावल्लवैरत्यजदिंदुमंगेट् तावत्समादायमितैर्गताः स्युः॥**[52]

अर्थात् लग्नाधिपतिः चन्द्रात् यावदंशदूरं गच्छति, प्रष्टुः तावदायुः विगत एव। तथैव लग्नाधिपतिः चन्द्रं यावदंशं प्राप्नोति, प्रष्टुः तावदायुः अवशिष्यतेति मन्तव्यम्।

मम तु अभिप्रायोयम् केवलं सामान्यज्ञानाय उक्तमासीत्। केवलम् एकां रीतिमाश्रित्य फलादेशः न निर्णेतव्यः। अस्मिन् विषये नैके आचार्याः अनेकग्रन्थेषु अनेकरूपेण अकथयन् यथा पराशरः -

**अष्टमं ह्यायुषः स्थानमष्टमादष्टमं च यत्।**
**तयोरपि व्ययस्थानं मारकस्थानमुच्यते॥**[53]

अर्थात् जन्मलग्नात् अष्टमभावे तथैव तस्मात् अष्टमभावात् अष्टमभावे अर्थात् लग्नात् तृतीयभावम् आयुषः स्थानमित्युच्यते। अस्य द्वादश अर्थात् सप्तमद्वितीयस्थानानि मारकस्थानानीति कथ्यन्ते। मारकेशग्रहस्य दशादिसमये मारकस्थाने अथवा मारकेशग्रहेण सह पापग्रहो षडायेशः स्थितश्चेत्, ,तस्य दशान्तर्दशादिः यदि आयुर्दायस्यान्तर्भवति तर्हि सो अवश्यं निधनमाप्नोति इति वक्तव्यम्।

---

[52](प्रश्नशिरोमणिः.2.प्रष्टु आयुविचारः.1)
[53](लघुपाराशरी.4.1)

आचार्यः मुकन्ददैवज्ञपर्वतीयः स्वीय नष्टजातकनामके ग्रन्थे एवमथयत् -

**उद्गतकलासमूहं परमायुस्ताडितं समुद्धृत्य।**
**मण्डलकलाभिराप्तो वर्षादिरथायुषः कालः॥**[54]

इष्टकालात् स्पष्टलग्नस्य साधना करणीया। अनन्तरं लग्नस्य राशि(३०) तः गणनां कृत्वा अंशसंयोजनेन तथैव तं योगं ६० तः गणनं कृत्वा तस्मिन् कलायोजनेन स्पष्टलग्नस्य कलानिर्माणेन ज्ञेयम्। एताः कलाः मनुष्यस्य परमायुतः गणनं कृत्वा २१६०० भागदानेन प्राप्तलब्धस्य समानं वर्षं, मासः, दिनं, घटिः एवं क्षणमिति तदेव प्रश्नकर्तुः आयुर्भवति।

एवं प्रकारेण बहुविधमतानि भवन्ति। अमुं सम्यक् विज्ञाय निर्णयकरणानन्तरमेव फलं वक्तव्यम्। अधुना अर्कादिग्रहाणां गुणादिवर्णनं क्रियते।

**सन्ततिप्रश्नः -**

**प्रजातन्तुं मा व्यवच्छेत्सीः।**[55] **माच्छित्था।**[56]सन्तानपरम्परां मा च्छेद इति पुनः पुनः वेदमन्त्राः घोषयन्ति। 'पुन्नाम्नो नरकान्त्रायत इति पुत्रः' मातापित्रोः अङ्गसंयोगेनैव सन्तानस्य उत्पत्तिः जायते। पितैव पुत्ररूपेण जन्म लभते।

---

[54] (नष्ट जातकम्.2.48)

[55](तैत्तिरीयोपनिषद्.1.11.1)

[56](कौषीतकि ब्राह्मणोपनिषद्.3.2.11)

**अङ्गादङ्गसम्भूतं स्वमङ्गमधितिष्ठति।**
**पिता पुत्रत्वमापन्नो जायते म्रियतेऽपि वा॥** [57]

एवं प्रकारेण सन्ततिविषये पण्डितरुद्रमणिः अनेकान् योगान् अवदत्। यदि बृहस्पतिः नवमे अथवा पञ्चमभावे तर्हि शीघ्रमेव अधिकसन्तानप्राप्तिर्भविष्यति।[58]प्रश्नशिरोमणिग्रन्थे वर्णितममुं योगं वराहमिहिरः इतोऽपि विस्तारेण अवदत् यत् बृहस्पतिः त्रिकोणस्थः अथवा लग्ने स्थितं तर्हि निश्चयेन सन्तानोत्पत्तिसूचक एव।[59]अमुं विषयं पराशरमहर्षिः अतिविस्तरेण अकथयत् यत् गुरुः पञ्चमे अथवा नवमभावे स्थितश्चेत् तथा पुत्रेशः बलवान् तर्हि धनेशः दशमभावगतः तदा तस्य जातकस्य अष्टपुत्राः भवेयुः।[60] प्रश्नशिरोमणिमनुसृत्य यदि पञ्चमेशयुक्तः शुक्रः लग्ने एकादशे, पञ्चमभावे भवति तर्हि सन्तानप्राप्तिर्जायते। तथैव पापग्रहलग्ने बृहस्पतिः चतुर्थे, द्वितीये स्थानेषु स्थितः तदा केन्द्रे शुभग्रहः भवति चेत् बहुविलम्बेन सन्तानप्राप्तिर्जायते। यदि लग्नेश वा चन्द्रात् पञ्चमभावे वृश्चिक, वृषभ, सिंह, कन्याराशयः भवति तर्हि स्वल्पसन्तानं सम्भवति। चन्द्रपञ्चमभावयोराधारेण भावदीपिकाग्रन्थे एकः योगः उक्तः यत् - यदि लग्न, चन्द्र तथा गुरुतः

---

[57](अथर्ववेदीयज्यौतिषम्.159)

[58](प्रश्नशिरोमणिः.2.सन्ततिप्रश्नः.1)

[59](बृहज्जातकम्.4.3)

[60](बृहत्पाराशरहोराशास्त्रम्.17.26)

पञ्चमे यः कोऽपि पापग्रहश्चेत्तथैव तस्योपरि कस्यापि शुभग्रहस्य दृष्टिः नास्ति चेत् सन्तानं न जायते।[61]

प्रश्नशिरोमणिग्रन्थे - यदि पञ्चमभावः पापग्रहैः युक्तः अथवा दृष्टः तथैव शनिसूर्यग्रहौ स्वराशेः अष्टमभावगतौ तर्हि सा स्त्री वन्ध्या एव। यदि चन्द्रबुधग्रहौ अष्टमभावगतौ तर्हि दोषसहितकाकवन्ध्या इत्युच्यते।

यदि बृहस्पतिशुक्रौ अष्टमभावे स्थितौ तर्हि स्त्रीणां सन्तानप्राप्त्यनन्तरं मरणं सम्भवति। तथैव कुजः भवति चेत् स्त्रीणां गर्भस्रावः जायते। यदि बलवान् अष्टमेशः अष्टमभावगतस्तर्हि विपुष्पिणी अर्थात् स्त्रीणां रजोधर्मः न भवेत्। तथैव पापग्रहः द्वितीये, द्वादशे, अष्टमे वा स्थितश्चेत् प्रथमसन्तानस्य हानिः, पुनः सन्तानभाग्यं न सम्भाव्यते। पञ्चमेशः स्वस्वामिना दृष्टो वा शुभग्रहैः युक्तो दृष्टो वा तर्हि उत्तमसन्तानलाभः भवेत्। अस्मिन् विषये रावणसंहितायां एकः श्लोको लभ्यते। यथा -

**सम्पूर्णबलसंयुक्तः पुत्रस्थान गतश्शुभः।**
**अदृष्टः पुत्रनाथेन तदा दत्तादयस्सुताः॥**[62]

अर्थात् सम्पूर्णरूपेण बलवान् शुभग्रहः पञ्चमस्थाने भवेत् परन्तु सः पञ्चमेशेन न दृष्टश्चेत् दत्तकादि पुत्रप्राप्तिर्भवेत्।

---

[61](भावदीपिका.16)

[62](रावण संहिता-पृ.सं.1051)

प्रश्नशिरोमणिग्रन्थे यदि चन्द्रबुधशुक्राः द्विस्वभावराशेः उपरि स्थितास्तर्हि प्रथमं जायमानसन्तानमेव दीयते तथैव ते ग्रहाः धनुराशेः उपरि स्थितास्तथा कदापि सन्तानमेव न सम्भवेत्।

पञ्चमस्थाने यावत् पुरुषग्रहाणां दृष्टिः तावन्तः पुत्राः तथैव यावत् स्त्रीग्रहाणां दृष्टिः तावन्त्यः पुत्र्यः भवेयुः। यदि शुभग्रहाणां दृष्टिः भवति तर्हि द्विगुणसन्तानमिति तथैव अशुभग्रहाणां दृष्टिः तर्हि सन्तानहानिः अथवा निष्फलमिति उच्यते। यदि शुभ-अशुभग्रहयोः उभयप्राकरक दृष्टिस्तर्हि मिश्रमफलं प्राप्यते अर्थात् सन्तानहानिः तथैव प्राप्तिश्च लभ्यते।

यदि पञ्चमस्थाने बृहस्पतेः राशिः (धनुः मीनः) तर्हि पुत्रसुखस्य हानिर्भवेत्। अर्थात् सिंहलग्ने तथैव वृश्चिकलग्ने उत्पन्नजातकस्य पञ्चमभावाङ्कस्य अथवा नवांशसमानसन्तान-स्यसङ्ख्या वक्तव्या। पञ्चमभावे शुक्रस्य नवांशः शुक्रात् दृष्टश्चेत् दासी अथवा स्त्रियाः उदरात् अधिकसङ्ख्याकसन्तानम् जायते। एवं प्रकारेण चन्द्रात् ज्ञेयम् अर्थात् चन्द्रः नवांशे पञ्चमे चन्द्रात् दृष्टश्चेदपि पूर्वोक्तरूपेण अधिकसन्तानप्राप्तिः भविष्यति। अथवा सुतेशस्य नवांशसमानसन्तानसङ्ख्या जायते।

**यदि सुते शनिभं विधुवीक्षितं सशनिलब्धसुतो विधुवद्बुधात्।**
**शनिगणो यदि चेन्दुगणः सुते तरणिकाव्यदृशा च पुनर्भवः॥**[63]

यदि पञ्चमे शनेः राशिः चन्द्रेण दृष्टः अथवा युक्तस्तर्हि लब्धपुत्रः अर्थात् केषाञ्चित् अन्यमनुष्याणां पुत्रं दत्तपुत्ररूपेण

[63](प्रश्नशिरोमणिः.2.सन्ततिप्रश्नः.8)

स्वीकरोति। एवं चन्द्रमासे तुल्यबुधादपि चन्द्रस्य वर्गपञ्चमभावे सूर्यः शनिना दृष्टश्चेत् द्वितीयम् उढयापत्न्याः पुत्रलाभो भवेत्। पञ्चमभावे शनेः वर्गः बुधेन दृष्टः तथैव सूर्यः कुजेन अदृष्टं तथैव पञ्चमभावे बुधस्य वर्गः शनिना दृष्टः तथा कुजग्रहः बुधेन अदृष्टश्चेत् तस्मै मनुष्याय ब्राह्मणादिरूपपुत्रः जनिष्यते। पञ्चमग्रहस्य नवांशः यावत्न्यः पापग्रहैः दृष्टः वा युक्तश्चेत् तावन्तः गर्भाः निष्फलाः भविष्यन्ति। परन्तु शुभग्रहः न दृष्टश्चेत् एषः योगः सम्भाव्यते। यदि सुतेशः कुजग्रहेण सह अथवा एतेषां मध्ये भवेत्तर्हि पुत्राणां नाशः सम्भवति। यथा – यदि पञ्चमेशः अष्टमभावे यावद्भिः ग्रहैः सह भवन्ति तावन्तः पुत्राणां हानिः भवेत्। परन्तु प्रश्नवैष्णव-नामके ग्रन्थे एवमुक्तं वर्तते यत् यदि पञ्चमेशः अष्टमभावे बलवान् रूपेण तिष्ठति तर्हि स्त्रियाः शरीरे गर्भदानबीजं न भवेत्।

**गर्भे किमिति प्रश्नः** -

यदा भ्रूणस्य लिङ्गविषये प्रश्न क्रियते तदैव तिथि, प्रहर, वार, नक्षत्रेषु एकैकं नूनं कृत्वा सप्तमभागं देयम्, विषमाङ्कम् (१, ३, ५) अवशिष्यते तर्हि पुत्रसन्तानं, समाङ्कमवशिष्यते (२, ४, ६) तर्हि पुत्रीसन्तानञ्च जायते। प्रसवचिन्तामणिनामके ग्रन्थे उक्तं यत् एतस्मिन् विषये गर्भवतीस्त्रियः नामाक्षरसङ्ख्यापि योजनीया इति।

**प्रश्ने वारो भं तिथिस् तन्मितिर् या नाम्नो वर्णा गर्भवत्या युवत्याः।**
**सा तैर् युक्ताः सप्तभक्तावशेष ओजे पुत्रः स्त्री समे खे प्रजा नो॥**[64]

[64](भावदीपिका.5.31)

अर्थात् प्रश्नकरणसमये यः वार, नक्षत्र, तिथिश्च भवेत्  तेषां सङ्ख्या योजयित्वा तस्मिन् गर्भवतीस्त्रियाः नामाक्षरसङ्ख्यामऽपि योजयित्वा यः योगफलं समधिगच्छति, तस्मिन् सप्तमभागं दीयमाने सति यदि एकं, त्रीणि, पञ्चैते अवशिष्यते तर्हि भ्रूणः पुल्लिङ्गः, द्वितीय, चतुर्थ, षडेते अवशिष्यते तर्हि भ्रूणः स्त्रीलिङ्गः, तथैव शून्यमेवावशिष्यते तर्हि प्रसवमेव न सम्पद्यते। एतस्मिन् विषये अनेके आचार्याः अनेक विधाभिप्रायप्रकटनमकुर्वन्। गर्गमुनिरपि अन्यसूत्रमेकम् अप्रकटयत् यथा- पिण्डे भागत्रयं देयम्, यदि एकमवशिष्यते पुत्रः, द्वावशिष्यते कन्या तथैव शून्यमवशिष्यते तर्हि नपुंसकः जायते।[65]प्रश्नशिरोमणिग्रन्थे - यदि लग्न तथा लग्नेशः पुरुषराशेः (१, ३, ५, ७, ९, ११) अथवा विषमराशेः नवांशः तर्हि पुरुषः अथवा विषमराशौ शनैश्चर तर्हि पुत्रः लभ्यते। योगममुम् इतोऽपि विस्तरेण सारावलीग्रन्थे कथितम् यत् लग्नं चन्द्रः गुरुः रविः एते विषमराशौ तथैव विषमनवांशे बलसम्पन्नरूपेण भवन्ति तर्हि पुत्रजन्म, यदि समराशेः (२, ४, ६, ८, १०, १२) समनवांशे तर्हि कन्या सम्भवतीति ज्ञातव्यम्।[66]

प्रश्नशिरोमणिग्रन्थे - यदि लग्न-सूर्य-बृहस्पतयः एते विषमराशौ भवन्ति तर्हि पुत्रसन्तानं भवति। यदि लग्न-सूर्य-बृहस्पतयः एते समराशौ भवन्ति तर्हि कन्या जनिष्यति। तथैव सूर्यः नरराशिगतलग्ने स्थितः तर्हि पुत्रोदयः भवेत्। अस्मिन् योगे अन्याभिप्रायाः जातकदीपिकानामकग्रन्थे लभ्यन्ते यथा- यदि

---

[65]गर्भे त्रिभिः क्रमाज्ज्ञेयं नरनारीनपुंसकम्।
लोकज्ञानेऽपि वै तद्वत्कालज्ञानेऽपि वै तथा॥ (गर्गमनोरमा.1.21)

[66](सारावली.8.14)

बलवान् गुरुः रविग्रहः च विषमराशौ भवतः तर्हि पुरुषसन्तानं, यदि शुक्रचन्द्रकुजग्रहाः समराशौ तर्हि कन्यायाः जन्मेति वक्तव्यम्।[67]

प्रश्नशिरोमणिग्रन्थे - यदि पञ्चमभावस्य नवांशाधिपतिः, पूर्णबलयुक्तः, पुरुषराशेः उपरि स्थितः अथवा शुभग्रहैः दृषस्तर्हि पुत्रसन्तानं सम्भवेत्। यदि सुतेशः राहुकुजग्रहैः युक्तः अथवा राहुकुजयोर्मध्ये अस्तम् भवति तर्हि गर्भस्य हानिः सम्भवति। पञ्चमभावे शुभग्रहस्थितिः, समराशैः चन्द्र, शुक्र, तथैव विषमराशैःबृहस्पतिः, शनैश्चरः, सूर्य, कुजः चेत् निश्चयेन गर्भे अपत्यद्वयमिति ज्ञेयम्। अस्मिन् विषये प्रश्नचिन्तामणिग्रन्थे अल्पमेकं सामन्ययोगमपि उक्तमस्ति। यथा गर्भाधानलग्ने चन्द्रः समराशौ भवति चेत् तथैव बलयुक्तग्रहात् दृष्टश्चेदपि पुमान्-अपत्यम्, स्त्री-अपत्यम् च जनिष्येते।[68]

प्रश्नशिरोमणि ग्रन्थे - समराशेः चन्द्रं पुरुषग्रह पश्यति चेत् पुत्रयोगो सम्भवेत्। एवं प्रकारेण बलवान् बुधः-शनिः-बृहस्पतिः-समराशेः भूत्वा अन्यग्रहैः दृष्टश्चेदपि पुत्रद्वययोग इति मन्तव्यः। यदि पुरुषराशिस्थ चन्द्रात् कस्यापि पुरुषग्रहस्य इत्थसालयोगश्चेत् पुत्रोदयः भवेत्। यदि लग्नेशः पुरुषग्रहः भवेत्तथैव पुरुषराशिसम्बन्धितश्चेत् पुत्रोत्पत्तिः जायते। सूर्योऽपि पुरुषराशिस्थचेत् पुत्रोदयः भवेत्। तथैव पञ्चमभावे समराशिर्भवेद्येवं

---

[67](जातक दीपिका.2.9)

[68] धनुर् यमांशेमरपूज्यहेलीदृषटौ बुधेन द्विसुतप्रदौ स्तः।
स्त्र्यन्त्यांशगाः काव्यकुसूनुचन्द्राश् चान्द्रीक्षिताश् चेद् द्विसुताप्रदास्युः॥
(प्रसव-चिन्तामणिः. -4-3)

बुधचन्द्रशुक्रा अपि समराशिसम्बन्धिता तर्हि कन्योत्पत्तिः जायते। यदि द्वौ द्वौ ग्रहौ चतुर्षु स्थानेषु स्थितौ तर्हि सन्ततिद्वयं जायते। अर्थात् प्रश्नकुण्डल्यां चतुर्षु स्थानेषु विभिन्नेषु द्वौ द्वौ ग्रहौ स्थितौ तर्हि द्विसन्तानप्राप्तिः स्यात्। परन्तु अत्रैको विशेषः यदि तावेव युग्मौ पुरुषराशौ तर्हि पुत्रसन्तानद्वयं, तथैव स्त्रीराशौ अथवा द्विस्वभावराशौ तिष्ठति तर्हि कन्याद्वयमुत्पद्यते। पूर्वाह्णे सूर्यात् चन्द्रः अग्रे स्थितः चेत् गर्भे पुत्रः तथैव अपराह्णे चन्द्रः पृष्टे स्थितः चेत् कन्या जायते। विषयोऽयम् अन्यग्रन्थेष्वपि लभ्यते एव। अनेन ज्ञायते यत् अन्याचार्याः अपि विषयममुमङ्गीकुर्वन्ति। पुत्रकम्पादिज्ञानप्रश्नविषये प्रश्नाङ्कचूडामणिग्रन्थे एवं लिखितमस्ति-

पण्डितरुद्रमणिः अतिसामान्यरूपेण पुत्रकन्यादिज्ञानविषये एवमुक्तवान् यत् - गर्भे भ्रूणः कदाचित् दक्षिणपार्श्वे, वामपार्श्वे कदाचित् मध्ये च दृश्यते। यदि भ्रूणः गर्भस्थ दक्षिणभागे गोलाकारप्रतीतिश्चेत् पुत्रो जायते। वामभागे चेत् कन्या जायते। उभयोर्मध्ये यदि नपुंसको जायते। उभयत्रापि वर्तते चेत् शिशुद्वयं जायतेति कथ्यते।

एवं प्रकारेण मनुष्याणां तथैव पशूनां गर्भस्य ज्ञानं यथावत् ज्ञायते। गर्भे किमिति प्रश्नस्य समाधान्तरम् अधुना गर्भभ्रान्तिप्रश्नः विव्रीयते किमर्थमिति चेत् प्रथमं गर्भविषये अनन्तरं गर्भस्थ विषये ज्ञानमवश्यमेव।

**गर्भभ्रान्तिप्रश्नः -**

यदि पञ्चमे लग्ने शुभग्रहस्यस्थितिः तर्हि सा गर्भवती इति कथ्यते। अत्र पण्डितरुद्रमणिः एतेषु भावेषु शुभग्रहाणां फलं वदति परन्तु प्रश्नमार्गे पञ्चमभावशुभग्रहयोर्मध्ये अर्थात् शुभकर्तरीयोगे स्थितश्चेत् तथैव तस्योपरि शुभग्रहाणाम् युति अथवा दृष्टिर्वा पञ्चमेशयुक्तो वा दृष्टश्चेत् पुत्रो जायते इति उक्तम् वर्तते।[69] परन्तु आचार्य बादरायणस्य मतमेवं भवति-

**पुत्रं लभते बाल्ये होरासंस्थः शुभश्च यस्येह।**
**दशमे शुभस्तु कुर्याद्यौवनकाले नृणां पुत्रम्॥[70]**

अर्थात् लग्ने शुभग्रहश्चेत् अल्पायुवान् जातको भवेत्। दशमस्थाने शुभग्रहश्चेत् यौवने एव पुत्रः जायते। चतुर्थस्थाने शभग्रहस्थितश्चेत् स्त्रीणां प्रौढावस्थायामेव विलम्बेन सन्तानप्राप्तिः जायते । प्रश्नशिरोमणिग्रन्थे - सप्तमेशलग्नेशौ पञ्चमभावे स्थितौ अथवा सप्तमेशपञ्चमेशौ लग्ने स्थितौ तर्हि स्त्री गर्भवती भवेत्। इतरथा तु सा गर्भवती न। लग्ने एकादशे, पञ्चमस्थानेषु बलवान् ग्रहाः तिष्ठति चेत् तथैव वक्री, नीचः, अस्तकः वा न यदि तर्हि सा गर्भवती एव। परन्तु आचार्य भट्टोत्पलस्य मतानुसारेण यदि शुभग्रहः पञ्चमे तथैव एकादशस्थानेषु स्थितस्तर्हि स्त्री गर्भिणीति निश्चयेन वक्तव्यम्।[71]

---

[69](प्रश्नमार्गः.18.20)

[70](प्रश्नविद्या.6.25)

[71](प्रश्नज्ञान.32)

प्रश्नशिरोमणिग्रन्थे - यदि चन्द्रलग्नाधिपती पञ्चमभावे स्थितौ अथवा पञ्चमेशः लग्नस्थानं पश्यति तर्हि सा गर्भं धरत्येव। चन्द्रः पापग्रहेण सह इसराफयोगे स्थितश्चेत् सा गर्भिणी न भविष्यति। लग्नेशचन्द्रौ केन्द्रे स्थितौ अथवा पञ्चमेशेन सह इत्थसालयोगं कुरूतः चेत् सा गर्भवती एव। यदि पञ्चमेशेन सह चन्द्रलग्नेशौ आपोक्लिम (३, ६, १२) स्थाने दुष्टेत्थसाल तर्हि सा गर्भं न धरति। एवं प्रकारेण क्षीणचन्द्रस्य योगादपि ज्ञेयम्।[72]एषः योगः प्रश्नवैष्णवग्रन्थे एवं कथितः लग्नेशचन्द्रौ पञ्चमेशेन सह ऋद्धिसालयोगं कुरुतः परन्तु आत्मोत्क्रम (आपोक्लिम्) भावे एषः योगोऽस्ति तर्हि शुभग्रहाणामभावेन गर्भधरणं न भवत्येव।[73]

गर्भः अस्ति वा न वा इत्यस्मिन् विषये निश्चयकरणानन्तरं गर्भस्य क्षेमपूर्वकसमाचारम् अथवा गर्भपतनसमाचारविचारणाय अधुना गर्भक्षेमप्रश्नः उच्यते।

**गर्भक्षेमप्रश्नः -**

यदि व्ययाधिपतिः शुभग्रहैः दृष्टः अथवा युक्तःतदा केन्द्रे स्थितस्तर्हि गर्भस्य नाशः न जायते।

यदि पापग्रहः पञ्चमे तथैव लग्नेशोऽपि अशुभश्चेत् तथा पापग्रहेणा सह चन्द्रः इत्थसालयोगं करोति तर्हि गर्भं निष्फलमेव।

यदि लग्नेशः वक्री भूतः अथवा लग्नेशः चन्द्रः च पापग्रहेण सह इत्थसालयोगे तर्हि गर्भनाश एव। अस्य योगविषये अतिविस्तरेण प्रश्नवैष्णवनामकग्रन्थे एवमुक्तमस्ति यत्- यदि लग्नेशः वक्री भवेत्

---

[72](प्रश्नशिरोमणिः.2.गर्भभ्रान्तिप्रश्नः.4)

[73]लग्नेशचन्द्रयोः पुत्रनाथेत्थिशालसंस्थिते।
आपोक्लिमे न गर्भः स्यात्पुत्रत्वं नास्त्यनीक्षणात्॥ (प्रश्नवैष्णवः.8.38)

अथवा लग्नेशः चन्द्रेण सह यः ग्रह भवति, सः वक्री भूत्वा उभयोः ग्रहयोः साकं इत्थसालं करोति तर्हि गर्भस्य शिशोः मृत्युर्भवेत्।[74]

प्रश्नशिरोमणिगन्थे पुत्रेशः शुभग्रहैः दृष्टो वा युक्तश्चेत् तथैव शुभग्रहोऽपि बलवान् चेत् गर्भं सुखपूर्वकरूपेण स्थिरं भवति। अस्मात् व्यतिरेकभावेन चेत् उक्तयोगः नैव सम्पद्यते अर्थात् गर्भं नैव फलति।[75]

**बालानां जीवितप्रश्नः -**

यदि शुभग्रहैः दृष्टो वा युक्तः द्वादेशः केन्द्रे वा (१, ४, ७, १०) पञ्चमे, तथैव पूर्णचन्द्रः केन्द्रे भवति तर्हि बालको जीवत्येव। श्रीमन्नारायणदासः अस्मिन् योगविषये एवमकथयत् **शिशुर्जीवति दीर्घकालः**[76]इति। पण्डितरुद्रमणिः अग्रे गत्वा अन्यस्य योगस्य विषये कथयति यत् - बृहस्पतिः पापग्रहैः दृष्टो वा युक्तः एवं द्वादशभावोऽपि अशुभग्रहैः दृष्ट वा युक्तः तर्हि बालकः नैव जीवति। व्ययेशः पापग्रहैः युक्तः, आपोक्लिम् (३, ६, १२)स्थाने स्थितः तदा जातकः मरणं प्राप्नोति। एतस्मिन् विषये अन्यग्रन्थेष्वेवं लिखितम् वर्तते –

**रिःफे शुभैर्दृष्टियुते च जीवे पापग्रहैर्दृष्टियुते न जीवः।**
**व्ययेश्वरे पापखगे स पापे आपोक्लिमस्थे म्रियते स बालः॥**[77]

---

[74](प्रश्नवैष्णवः.8.36)

[75](प्रश्नशिरोमणिः.2.गर्भक्षेमप्रश्नः.2)

[76](प्रश्नवैष्णवः.8.39)

[77](प्रश्नवैष्णवः.8.40)

अर्थात्  द्वादशस्थाने स्थितः गुरुः शुभग्रहैः युक्तो वा दृष्टः तथा पापग्रहाणां दृष्टिरहितः तथा द्वादशेशः, पापग्रहः आपोक्लिम् (३, ६, १२) भावेषु स्थितः तर्हि गर्भगतबालकः उत्पन्नानन्तरं म्रियते ध्रुवम्।

**भ्रात्रादयः स्वस्था न वेति प्रश्नः -**

**भ्रातृणां सङ्ग्रहार्थं च सुखार्थं चापि लक्ष्मण।**
**राज्यमप्यहमिच्छामि सत्येनायुधमालभे॥**[78]

हे सुमित्रकुमार! अहं मम भ्रातृणां सङ्ग्रहार्थं तथैव सुखायैव राज्यमिच्छामि अहं मम धनुः स्पृष्ट्वा शपथं करोमि।

रामचन्द्रमूर्तिं वयं स्थितप्रज्ञः इत्यङ्गीकुर्मः। स एव भ्रातृणां विषये एतादृशभावप्रकटनं करोति तर्हि सामान्यजनाभिप्रायः कः भवेत्? अर्थात् वक्तुं न पारयामः इत्यर्थः। अतः एवं प्रकारेण भ्रातृविषये पृच्छकस्य प्रश्नस्य विचारः प्रश्नशिरोमणिग्रन्थे एवं लिखितः वर्तते यत्

**यद्गृहं स्वपति सौम्यवीक्षितं चेत्पतिश्च सुपदे सुदृष्युक्।**
**तस्य सौख्यमभयञ्च तत्पतावास्तगे खलविमर्दितेऽन्यथा॥**[79]

यस्य कुशलं प्रक्ष्यते तस्य गृहं स्वपतिद्वारा दृष्टं अथवा तस्य गृहाधिपतिग्रहः शुभस्थाने शुभग्रहैः युक्तस्तर्हि सः सुखी तथैव निर्भय इत्युच्यते। तथैव स्थानपतिः अस्तो ग्रहैः पीडितः वातर्हि

---

[78](रामायणम्. 2.97.6)

[79](प्रश्नशिरोमणिः.2.ममभ्रात्रादयः स्वस्था न वेति प्रश्ने विचारः.1)

अन्यथा वक्तव्यम्। अर्थात् यस्य कुशलं पृच्यते सः दुःखी, भययुक्तो वा भवेत्।

अत्र पण्डितरुद्रमणिः 'यद्गृहम्' इत्युक्तवान्, अस्यार्थः यस्मिन् विषये प्रश्नः प्रक्ष्यते तस्य विषयस्य कारकभावं, एवमुक्ते सति तस्य विचारः केवलं भातृभावादेव न परन्तु सामान्यतया वक्तुम् अभिप्रायः यदस्ति यत् - सर्वेषु विषयेषु प्राथमिकविचारः कथं करणीयः इत्यस्मिन् विषये सर्वेषाम् आचार्याणाम् एकमेव मतं दृश्यते।

प्रश्नशिरोमणिग्रन्थे - यदि षष्ठेशभात्रादिस्थानेशयोः परस्परं इत्थसालयोगः अथवा उभौ षष्ठगृहे स्थितौ अथवा भ्रात्रादिस्थानेशः षष्ठगृहे स्थिरराशेः भवेत् अथवा भ्रातुः गृहे पापग्रहश्चेत् अथवा भ्रात्रादिगृहं क्रूरग्रहेण दृष्टं चेत् रोगात् पीडितो भवेदिति उक्तम्। भ्रात्रादिस्थानेशः पञ्चमे एकादशस्थाने चेत् प्रश्नकर्तुः भ्राता तस्मात् अतिदूरे भविष्यति। एवं प्रकारेण पुत्रेशः पञ्चमगृहे चेत् पुत्रेण सान्निध्यं, सुखञ्च लभ्यते। पूर्वोक्तरीत्या अशुभयोगः भवति चेत् रोगः, भयं, हानिः च जायन्ते।

**विवाहप्रश्नः** -

विवाहशब्देन पाणिग्रहणाख्यः संस्कारविशेष उच्यते। प्रसङ्गेऽस्मिन् मनुनोक्त स्त्रीणामष्टप्रकारकविवाहान् सङ्क्षेपेण विव्रीयते यथा -

**ब्रह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः।**
**गान्धर्वो राक्षसोश्चैव पैशाश्चाष्टमोऽधमः॥** [80]

ब्राह्म, दैव, आर्ष, प्राजापत्य, आसुर, गान्धर्व, राक्षस तथैव अष्टमः अतितुच्छः

पैशाचविवाहः। विवाहविषयकप्रश्न नाम किम्? एतस्मिन् विषये प्रश्नमार्गे एवं कथितं वर्तते यथा -

**विवाहविषये प्रश्न एषः कीदृग् भविष्यति।**
**जिज्ञासा यदि चेत्तर्हि तत्प्रकारोऽथ कथ्यते॥**
**कन्यकेयमनेनोढा भर्तृपुत्रादिसंयुता।**
**भविता किन्नु किन्नो वा विवाहप्रश्न ईदृशः॥**[81]

अर्थात् अनेन वरेण सह विवाहः क्रियते तर्हि एषा कन्या सुखसहिता, सौभाग्यवती तथा पुत्रवती भवेद्वा? न वा? विवाहप्रश्नः दैवज्ञेन प्रष्टव्यो भवति। एवं प्रश्नकरणसमये सर्वप्रथमं कन्या एवं वरस्य उभयोः आयुः तथा सन्तानदृष्टितः सर्वविषयविचारः कुर्वन् दैवज्ञः प्रश्नलग्नात् भाविदाम्पत्यजीवने तयोः शुभाशुभस्य फलादेशं करणीयम्। किमर्थमिति चेत् सन्तानोत्पत्तिकरणेन विवाहः क्रियते तथैव वंशवृद्धिर्जाते सति पितृणामतिप्रसन्नता प्राप्यते।

**कन्यायाः पुरुषस्य च प्रथमतो निर्णीय चायुःपुनस्**
**सन्तानाख्यतिथिं ततश्च सकलं दैवज्ञवर्यस्ततः।**

---

[80](मनुस्मृतिः.3.21)
[81](प्रश्नमार्गः.17.6, 7)

**भाविप्रश्नविलग्नतोऽपि निखिलम्पाणिग्रहङ्कारयेत्**
**सन्तानाय यतः प्रयाति नितराम्प्रीतिं पिता चाङ्गना॥**[82]

एतस्मिन् विषये पण्डितरुद्रमणिः कथयति यत्-लग्नात् समस्थाने शनैश्चरःस्थितश्चेत् वराय कन्यादानयोगः भवति। तथैव विषमराशिगतः एकाकी एव शनैश्चरः वध्वै वरदाता भवेत्। दशमे, एकादशे, षष्ठे, पञ्चमे स्थाने च चन्द्रः दशमेशात् तथा सूर्यात् दृष्टश्चेत् विवाहो सम्भवेति। एष योगः अन्यग्रन्थेषु अन्यरूपेण प्राप्यते।[83] यथा मुहूर्तचिन्तामणिग्रन्थे - लग्नात् यदि चन्द्रः दशमे, एकादशे, षष्ठे, सप्तमे, पञ्चमस्थानेषु एकस्मिन्नपि योगे स्थिस्तथैव बृहस्पतिग्रहेण दृष्टस्तर्हि एतद्दशसुयोगे ज्योतिर्वित् कन्यायाः पितरं शीघ्रमेव विवाहो भवत्वित्यादिशति।[84] आचार्य भट्टोत्पलकृत अर्यासप्ततिग्रन्थे लग्नात् तृतीये, पञ्चमे, सप्तमे,षष्ठे अथवा एकादशस्थाने स्थितं चन्द्रं गुरुः, सूर्यः बुधग्रहः वा पश्यन्ति चेत् विवाहो भवेत्।[85]

पण्डितरुद्रमणेः कथनं यत् यदि केन्द्रे (१, ४, ७, १०) त्रिकोणे (५, ९) एतेषु गृहेषु शुभग्रहस्थितिः तर्हि शीघ्रमेव विवाहो भवेत्। एष योगः प्रायः सर्वेषु ग्रन्थेषु उपलभ्यते। परन्तु श्रीपद्मप्रभुसूरीणां मतानुसारेण -

---

[82](रावण संहिता.6.6.विवाहनिरूपण.2)

[83](प्रश्नशिरोमणिः.2.विवाहप्रश्नः.1)

[84](मूहूर्तचिन्तामणिः.6.2)

[85](प्रश्नज्ञान.30)

**स्थाने चतुर्थे सौम्यत्वमापन्ने ललना धृता।**
**सप्तमे सौम्यतां प्राप्ते प्रष्टुः कान्ता विवाहिता॥**[86]

अर्थात् चतुर्थस्थाने शुभग्रहे स्थिते प्रश्नकर्तुः धृतास्त्री तथैव सप्तमस्थाने शुभग्रहश्चेत् विवाहिता भवेत्। आचार्य वराहमिहिराणां मतानुसारेण सप्तमे, द्वितीये, एवम् उपचय (३, ६, १०, ११) स्थानेषु स्थितः एवं गुरुणा दृष्ट चन्द्रः स्त्रीणां लाभप्रापकः। सैव पापग्रहयुक्तो वा दृष्टो वा स्त्रीणां अशुभदात्रदः।[87]

परन्तु पण्डितरुद्रमणेः अभिप्राये यथा चन्द्रः तृतीये, सप्तमे, षष्ठस्थाने वा वर्तमानः बृहस्पति-बुध-सूर्यग्रहैः दृष्टश्चेत् शीघ्रमेव विवाहः सम्पद्यते तथैव लग्ने चन्द्रः दशमेशेन दृष्टश्चेत् पापग्रहदृष्टिरहितश्च यदि स्त्रीदानशीलो भवेत्। यदि द्वितीयस्थः चन्द्रः शुक्रेण दृष्टस्तर्हि, पापग्रहदृष्टिरहितः स्त्री दानशीलो भवेत्। द्वितीयस्थ चन्द्रः शुक्रेण दृष्टश्चेत्, पापग्रहदृष्टिरहितः स्त्रीदानशीलो भवेत्। यदि सप्तमभावः चरराशौ चन्द्रेण युक्तस्तर्हि, शुक्रेण दृष्टस्तथा केन्द्रे पापग्रहस्थितः तर्हि वरः अधिकसङ्ख्याकस्त्रीणां पतिर्भवेत्। यस्मिन् लग्ने चन्द्रः द्वादशेश सूर्याभ्यां दृष्टः स्त्रीवरयोः विवाहकारकः भवेत्।[88]

---

[86](भुवन दीपक.91)

[87]सप्तमवित्तोपचयस्थानस्थो गुरुनिरीक्षितश्चन्द्रः।
विदधाति युवतिलाभं तन्नाशं पापयुतदृष्टः॥ (दैवज्ञवल्लभा.12.4)

[88](प्रश्नशिरोमणिः.2.विवाहप्रश्नः.3)

लग्ने, सप्तमे, दशमे, एकादशभावेषु शुक्रशुभग्रहैः दृष्टः सुन्दरस्त्री दाता भवेत्। लग्नात् सप्तमस्थाने स्थितश्शुक्रः शुभग्रहैः दृष्टः सुन्दरस्त्रीदाता। लग्नात् सप्तमस्थानगतशुक्रचन्द्राभ्यां सह इत्थसालं करोति तर्हि बधूदाता। अस्मिन् विषये नारदसंहितायाम् एवं कथितं यथा-

**शुक्रेन्दू युग्मराशिस्थौ युग्मांशकगतौ तदा।**
**वलिनौ वीक्षितौ लग्नं कन्यालाभो भवेत्तदा॥**[89]

अर्थात् प्रश्नसमये शुक्रचन्द्रौ समराशौ तथा समराशिः नवमांशे यदि पूर्णबली अपि लग्नं पश्यति तर्हि कन्यालाभो जायते। सप्तमभावे समराशिः भवेत् तस्मिन् चन्द्रः शुक्रस्य योगे अथवा दृष्टौतर्ह्यपि कन्यालाभ एव।

प्रश्नशिरोमणिग्रन्थे - तृतीये, नवमे, सप्तमे, दशमस्थानेषु स्थितः शुक्रः चन्द्रेण दृष्टः चेत् कन्यादाता भवेत्। शुक्रः शुभग्रहेण दृष्टश्चेत् रमणीस्त्रीणां दाता। यदि उच्चादि शुभग्रहाः लग्ने, चतुर्थे, सप्तमे, दशमे, एकादशस्थानेषु बलयुक्ताः तथा शुभग्रहैः दृष्टः च तर्हिः स्त्रीप्राप्तिः। यदि बृहस्पतिः लग्ने तथैव सप्तमे चरराशिः तथा अष्टमे, लग्ने, चतुर्थे, सप्तमे, दशमभावेषु पापग्रहाः न चेत् सुन्दरी, धन-जय-धर्मसंयुक्ता कन्या लभ्यते। दशमे सप्तमे उच्चस्थाने चन्द्रशुक्रबृहस्पतिभिः दृष्टश्चेत् सरूपवत्नी, सधना, सन्तानवती वधूः। सप्तमे पापग्रहः, षष्ठे शुभग्रहश्चेत् विवाहिता म्रियते। यदि जीविता चेत् एवं ज्ञेयम् - सप्तमे पापग्रहः तर्हि विवाहिता, चतुर्थे पापग्रहयुक्ता चेत् धृतस्त्री म्रियते। सप्तमे राहौ स्थिते यासां स्त्रीणां

[89](नारद संहिता.27.10)

विवाहो जायते ताः म्रियन्ते एव। सप्तमेशलग्नेशौ एकस्मिन् द्रेष्काणे स्थितौ तर्हि स्त्रीलोलः स्यात्। विषयेऽस्मिन् पूर्वकालामृतग्रन्थे उक्तं वर्तते यत् प्रश्नलग्नात् पञ्चमे पापग्रहः स्थितश्चेत् सन्तानहानिः, सप्तमगतपापग्रहात् कन्याहानिः लग्नगतपापग्रहात् वरहानिः अथवा अनिष्टम्, अष्टमस्थ पापग्रहः वरकन्ययोः उभयोः अनिष्टप्रदः।[90]प्रश्नशिरोमणिग्रन्थे यथा-

**यदि सुखं शुभवल्ललना धृता स्मरगृहं सशुभं च विवाहिता।**
**उभयतः खलयुग् विवधूर्भेद्धृतविवाहिताशङ्कभये शुभे॥**[91]

चतुर्थेशुभग्रहः स्थितश्चेत् धृत्वा तथैव सप्तमे शुभग्रहः चेत् विवाहितस्त्री भवेत्तदा उभयग्रहयोः पापग्रहश्चेत् विवधू भवेत्।

उभयत्र (चतुर्थे, सप्तमे) शुभग्रहौ स्थितौ तर्हि धृत्वा तथा विवाहितायाः पतिः भवेत्। अष्टमे, केन्द्रे (१, ४, ७, १०), एकादशस्थानेषु चन्द्रः पापग्रहैः सह इत्थसालं करोति तर्हि वधू न मिलत्येव। एतस्मिन् विषये दैवज्ञवल्लाभग्रन्थे एवं कथितं वर्तते यथा-

**यदि लग्नगतः क्रूरः पापस्तस्माच्च सप्तमे भवति।**
**सप्तभिरेव तदाऽब्दैः पुंसो निधनं विनिर्देश्यम्॥**[92]

अर्थात् लग्ने क्रूरग्रहः, तस्मात् सप्तमे पापग्रहे स्थिते तदा सप्तमे वर्षे तस्याः व्यक्तेः मृत्युर्भवेत्। पण्डितरुद्रमणिः एतस्मिन्

---

[90]पापः पञ्चमगो विनष्टतनयां कुर्यात्सजामित्रगः
कन्यां लग्नगतो वरं निधनगो हन्याच्च कन्यावरौ। (पूर्व कालामृतम्.3.2)

[91](प्रश्नशिरोमणिः.2.विवाहप्रश्न.9)

[92](दैवज्ञवल्लभा.12.6)

विषये अन्ययोगमपि कथयति-अष्टमे, केन्द्रे पापग्रहः स्थिते तस्मै पुरुषाय वधू न लभ्यत एव । यदि चतुर्थे राहुः धृतापि स्त्री मरणं प्राप्नोति। लग्ने शुक्रश्चेत् सुन्दरी, बृहस्पतिश्चेत् धनवती, बुधवती, बुधश्चेत् कुटिलबुद्धिमती, कुजश्चेत् रोगिणी, शनैश्चरश्चेत् विधवा, सूर्यश्चेत् क्रूरस्वभावी, चन्द्रश्चेत् मूर्खस्त्री भवेत्। लग्नगतग्रहविषये प्रायः सर्वेषामाचार्याणां मतमेकमेव। परन्तु बृहत्संहितायां श्लोकः एकः पण्डितरुद्रमणिसम्बन्धितश्लोकसाम्यं दृश्यते -

**सौरारजीवबुधराहुरवीन्दुशुक्राः कुर्युः प्रसह्य खलु सप्तमराशिसंस्थाः।**
**वैधव्यबन्धनवधक्षयमर्थनाश व्याधिप्रवासमरणानि यथाक्रमेण॥**[93]

विवाहलग्ने सप्तमे शनिश्चेत् वैधव्यं, कुजश्चेत् बन्धनं, गुरुश्चेत् मृत्युः, बुधश्चेत् विनाशः, राहुश्चेत् धननाशः, सूर्यश्चेत् रोगः, चन्द्रश्चेत् विदेशवासः, शुक्रश्चेत् मृत्युः इति।

भुवनदीपिकानुसारेण दशमस्थाने यदि द्वौ शुभग्रहौ स्थितौ तर्हि विवाहसमये वृष्टिः भवेत्। लग्ने शुभग्रहत्रयं चेत् अत्यधिकवृष्टिः सञ्जायते।[94]पण्डितरुद्रमणिमतानुसारेण यदि चतुर्थे, दशमे, एकादशभावेषु शुभग्रहस्थितिस्तर्हि विवाहसमये वृष्टिः भवेत्। विवाहप्रश्नकरणानन्तरं।

**स्त्रीपुंसयोः प्रीतिप्रश्नः -**

पुरुषः लग्नेशः, स्त्री सप्तमेशः इति कथ्यते। यदि सप्तमेशलग्नेशौ इत्थसालं कुरुतः अथवा उभयोः परस्परदृष्टिश्चेत्

---

[93](बृहत्संहिता.104.7)

[94](भुवन दीपक.97)

स्त्रीपुरुषयोः प्रीतिः भवेत्। लग्ने लग्नेशश्चेत् स्त्री भर्तुराज्ञाकारिणी भवेत्। लग्नेशः सप्तमभावे चेत् पति स्त्रीणामाज्ञाकारी भवेत्। यदि सप्तमेशलग्नेशौ लग्ने अथवा सप्तमभावे तर्हि स्त्रीपुरुषयोः परस्परं मित्रता भवेत्। लग्नेशसप्तमेशयोः परस्परवैरिदृष्टिश्चेत् उभयोः विरोधः एव। तथैव चतुर्थस्थाने शुभग्रहैः दृष्टश्चेत् पतिः स्त्रीणां धनभोगार्जनशीलो भवेत्। पतिस्वधनं तस्यै भार्यां ददाति। सप्तमभावः बलवान् तर्हि सा स्त्री बलवती, लग्नः बलवान् चेत् पुरुषः बलिष्टो स्यात्।

**स्वप्नप्रश्नः -**

**कूटस्थस्वप्नसम्बन्धमनो भावान् प्रचक्रिरे।**
**असन्नपि महेशानि स्वप्नोऽथ दुःखदो महान्॥**[95]

स्वप्नसम्बन्धित आत्मनि मनोभावोत्पत्तिः जायते। हे महेशानि! स्वप्नमसत्यं सत्यपि दुःखदायकमेव।वस्तुतः स्वप्नः गभीरः रहस्यवान् च भवति। स्वप्नः मनसःक्रीडायाः विशाल-उद्घाटितक्षेत्रं भवति। स्वप्नविषये कणादिमहर्षेः कथनं यत् **आत्ममनसोः संयोगविशेषात् संस्वराच्च स्मृतिः। तथा स्वप्नः।**[96] कदाचित् स्वप्नः शुभं, कदाचित् अशुभं च सूचयति। एवं प्रकारेण स्वप्ने किं दृष्टमित्यस्मिन् विषये ज्ञानाय पण्डितरुद्रमणिः सङ्क्षेपेण एवं कथितवान् - लग्ने सूर्यो वा सूर्यस्य नवांशस्थितिः तदा रक्तवस्त्र-सूर्य-चन्द्र-अग्निः वा स्वप्ने दृश्यते। चन्द्रमा चेत् श्वेतवस्त्र- माला-मणिः, कुजश्चेत् रक्तवर्णवस्तुः, मूङ्गः, बुधश्चेत् स्वर्गलोकवार्ताः,

[95](श्रीमाहेश्वरतन्त्रम्.19.59)

[96](वैशेषिकदर्शनम्.9.2.6, 7)

स्वर्गगमनं, बृहस्पतिश्चेत् विद्याप्रसङ्गः, आनन्दः, शुक्रश्चेत् क्रीडनं, आसवपानं, जलतरणं, विलासकरणं, शनिश्चेत् म्लेच्छ तथा शत्रुभयं, वन-पर्वतारोहणं, राहुकेतुश्चेत् नीचसङ्गः इत्यादि स्वप्ने दृश्यन्ते।

**सुरतप्रश्नः -**

केषाञ्चनजनानाम् एवं भ्रान्तिः भवेद्यत् भारतीयानां दृष्टिः कामोपभोगे निषिद्धेति तस्मात् न केवलं प्रणयनार्थेन स्वीकरणीयमिति। वस्तुतः पराशरमतानुसारेण यः पतिः ऋतुस्नानानान्तरं पत्नीँ न गच्छति सः घोरभ्रूणहत्यापातको भवेदित्यस्मिन् विषये नास्ति सन्देहो लेशः।

**ऋतुस्नातां तु यो भार्या सन्निधौ नोपगच्छति।**
**घोरायां भ्रूणहत्यायां यच्यते नात्र संशयः॥**[97]

भारतीयचिन्तने कामः तथा यौनशब्दौ उपलभ्येते। यदा पुरुषः सन्ततिमिच्छन् स्त्रीसमागमं काङ्क्षति सः कामीत्यनुमीयते। यदा पुरुषः आनन्दवृत्या स्त्रीसमागममिच्छति तं यौनमिति कथ्यते। यौनसम्बन्धविषये विष्णुपुराणे ययातिमुखात् वाचयति यत् सहस्रवर्षविषयसेवनान्तरमपि विषयलालसत्वं प्रतिदिनं वर्धतएव भवति।

**पूर्णं वर्षसहस्रं मे विषयासक्तचेतसः।**
**तथाप्यनुदिनं तृष्णा ममैतेष्वेव जायते॥**[98]

---

[97](प.स्मृ.4.15)

[98](विष्णुपुराणम्.4.2.28)

एवं प्रकारेण शास्त्रेषु कामं श्रेष्ठमिति यौनम् अधममिति उक्तमस्ति। अधुना एवं प्रकारकस्त्री-सम्भोगसम्बन्धप्रश्नाः, सुखप्रश्नाः इति कथ्यन्ते। एतस्मिन् विषये पण्डितरुद्रमणेः कथनमेवमस्ति - यदि पञ्चमे, षष्ठे, सप्तमे, तृतीये, एकादशभावे वा चन्द्रः शुक्र-बृहस्पति-सूर्यग्रहैः दृष्टः तथैव शुभफलदायकग्रहः केन्द्रे (१, ४ , ७, १०) नवमगृहे वा स्थिताः तर्हि कामिनीजनानां सद्भोगः सद्विलासः प्राप्यते।

पुरुषसंज्ञकराशिस्थलग्नेशस्य सप्तमेशः स्त्रीग्रहेण सह इत्थसालं करोति चेत् स्त्रीभोगः लभ्यते। सप्तमभावाधिपतिः तथैव लग्नाधिपतिः द्वौ एकस्मिन् गृहे स्थितौ तर्हि अतिसुखं प्राप्यते। परन्तु भोगः नैव लभ्यते।[99] परन्तु एतादृशयोग एव नैव भवति किमर्थमित्युक्ते ग्रहाणां क्षेत्राणि-सूर्यस्य सिंहराशिः, चन्द्रस्य कर्कराशिः, कुजस्य मेषवृश्चिकराशी, बुधस्य मिथुनकन्याराशी, गुरोः धनुमीनराशी, शुक्रस्य तुलावृषभराशी तथैव शनेः मकरकुम्भराशीतिआधिपतयनिर्णयात्।

सूर्यचन्द्रौ एकराशिः अधिपति अतः तौ त्यक्त्वा अन्यतरग्रहविचारः करणीयः। कुजः यदि मेषलग्ने स्थितः तदा वृश्चिकः अष्टमभावे चेत् वृश्चिकः लग्ने तथा मेषः षष्ठभावे तर्हि कुजः अस्य योगस्य कारको न भवितुमर्हति। वृश्चिकः लग्ने चेत् तुलाराशिः षष्ठभावे भवेद्यदि तुला लग्ने स्थिते वृश्चिकः अष्टमभावे भवेत् अतः शुक्रोऽपि अस्य योगस्य कारको न भवितुमर्हति। मिथुनलग्ने स्थिते कन्या चतुर्थभावे भवेद्यदि कन्या लग्ने, मिथुनं

[99](प्रश्नशिरोमणिः.2.स्वप्न तथा सुरतप्रश्न.3)

दशमभावे भवेत्। अतः बुधोऽपि अस्य योगस्य कारको न भवितुमर्हति। यदि धनुः लग्ने स्थिते मीनराशिः चतुर्थे सति मीनलग्नः तर्हि धनुः दशमभावे भवेत्। तथैव शनिः मकरकुम्भराशीनामधिपतिः भवति। उभयोः (द्वयोः) राश्योः समीपे भवेदपि एष योगः न सम्पद्यते। तस्मात् एवं प्रकारकयोगः असम्भव एव।

अधुना अन्ययोगविचारः क्रियते - यदि केन्द्रे (१, ४, ७, १०) शुभग्रहेण सह इत्थसालं कुर्वाणः चन्द्रस्तर्हि अभिमुखस्त्रीसङ्गः जायते। सप्तमगृहः क्रूरग्रहैः दृष्टश्चेत् सक्रोधः स्त्रीसङ्गो भवेत्। तथैव क्रूरग्रहैः युक्तश्चेत् कलहः अथवा पीडा भवेत्। एतस्मिन् विषये बृहज्जातके एकः श्लोकः अस्ति -

**यथास्तराशिर्मिथुनं समेति तथैव वाच्यो मिथुनप्रयोगः।**
**असद्ग्रहालोकितसंयुतेऽस्ते सरोष इष्टैः सविलासहासः॥**[100]

प्रश्नलग्नात् सप्तमभावगतराशेः यः जीवः भवेत् तयोः परस्परं मैथुनं इव अत्राऽपि स्त्रीपुरुषयोः मैथुनं भवेत्। सप्तमभावस्य उपरि क्रूरग्रहाणां दृष्टिः अथवा योगश्चेत् क्रोधेन साकं मैथुनं भवेत्। सप्तमे शुभग्रहयोगदर्शनात् सप्रेमोपहासेन दृष्टश्चेत् सप्रेमसाधारणरूपेण मैथुनं भवेत्।

एवं प्रकारकविषयं पण्डितरुद्रमणिरपि अङ्गीकरोत्येव। एतेषां मतानुसारेण यथा सप्तमग्रहः भवेत्तथैव रतिकरणशीलोऽपि तदा रतिः इति वक्तव्यम्। बृहस्पतिः लग्ने, शुक्रः सप्तमे, चन्द्रः चतुर्थभावे

[100](बृहज्जातकम्.4.2)

यदा तदा  विलासकरणशीलता भवेत्।[101]सुन्दरवेषः, रूपं तथा लावण्ययुक्तःतर्हि तरुण्या सह सुगन्धयुक्तरतिः प्राप्यते। दशमे केन्द्रगत चन्द्रशुक्रयोः इत्थसालं चेत् सुन्दरस्त्रिया सह उत्तमरतिप्राप्तिः।

यदि स्थिर वा द्विस्वभावराशिगतशनैश्चरः केन्द्रे स्थिस्तर्हि स्वस्त्री भोगी भवति। यदि चरराशिगतशनैश्चरः केन्द्रे तर्हि परस्त्री महादुर्भगा भवेत्। चरराशिगतकुजः- क्रोधपूर्णा स्त्री, चतुर्थभावे पापग्रहश्चेत् धृता, सप्तमभावे पापग्रहे स्थिते स्मृता, विवाहिता स्त्री भोगी भवेत्। स्थिरलग्नश्चेत् एकवारं, द्विस्वभावलग्नश्चेत् द्विवारं, चरलग्नश्चेत् त्रिवारं सम्भोगं भवेत्।

केन्द्रे (१, ४, ७, १०) दिनसंज्ञकग्रहः स्थितश्चेत् दिने तथा उक्तस्थाने रात्रिसंज्ञकः एकग्रहश्चेत् रात्रेः अन्ते, रात्रिसंज्ञका द्वौ ग्रहौ चेत् रात्रौ, सूर्यश्चेत् सन्ध्यायं भोगः इति वक्तव्यम्। यदि स्वराशेः ग्रहश्चेत् स्वगृहे, पापग्रह तथा अन्यग्रहस्यराशेः तर्हि अन्यगृहे मित्रराशेः भवेत्तर्हि मित्रस्य तथा शत्रुराशिश्चेत् शत्रुगृहे भोगः इति वक्तव्यम्।

अयं विषयोऽतिविस्तारेण विचारितो वर्तते। तदपि मैथुनं कथं भवेत्? कीदृशेति विचारः चर्चनीयः। पण्डितरुद्रमणिः धर्मिणां शास्त्ररूपात् तथैव अधर्मिणां शस्त्ररूपात् प्रयोगं कृतवान्। किमर्थमिति चेत् बृहदारण्यकोपनिषदि परपुरुषसेवकनिन्दां कृत्वा स्वपतिम्

---

[101]पीडा भवेद्याथास्तर्क्षे रतिकृच्च तथा रतिः।
जीवे तनौ भृगावस्ते सुखे चंद्रे विलासकृत॥ (प्रश्नशिरोमणिः.2.स्वप्न तथा सुरतप्रश्नः.5)

अनिन्दयन्ती करणशीलाः स्त्रियः एवमाशीर्वादं प्राप्नुवन्ति - **सा चेदस्मै दद्यादिन्द्रियेण ते यशसा यश आदधामीति यशस्विनावेव भवतः।**[102]

**अवलोकनम् -**

द्वितीयेऽध्याये अष्टत्रिंशत्यधिकशतश्लोकाः सन्ति। अस्मिन्नारम्भे धनलाभप्रश्नः, तदनन्तरं वाटिकाक्षेत्रादि लाभप्रश्नः, भूभाटकप्रश्नः, निधिप्रश्नः, क्रयविक्रयप्रश्नः, सन्ततिप्रश्नः, गर्भे किमिति प्रश्नः, गर्भक्षेमप्रश्नः, मम भ्रात्रादयः स्वस्था न वेति प्रश्नः, विवाहप्रश्नः, स्वप्नप्रश्नः, सुरतप्रश्नः इत्यादिविषयाः चर्चिताः वर्तन्ते।

तथैव धनलाभप्रश्नः, निधिप्रश्नः, सन्ततिविवाहप्रश्नानां विषये विस्तरेण चर्चितं वर्तन्ते। स्वप्नप्रश्नः, सुरतप्रश्नः, निधिप्रश्नः इत्यादिविषयाणां चर्चा क्वचिद्ग्रन्थेष्वेवोपलभ्यते। तादृशेषु ग्रन्थेषु प्रश्नशिरोमणिरन्यतमः।

[102] (बृहदारण्यकोपनिषद्.6.4.8)

## विशेषोऽध्यायः - द्वितीयभागः

केरलीयप्रश्नविचारकरणरताः विद्वांसः विषयसम्बन्धित-प्रश्नुसारेण अनेकप्रकारे विभक्तवन्तः। “मूकप्रश्न” नामके ग्रन्थे “डा. उमोशपुरी ज्ञानेश्वरमहाभागः” मुख्यविषय सम्बन्धिप्रश्नाः नवप्रकारेण विभक्ताः यथा –

1) लाभ–अलाभ विषयकप्रश्नविचारः
2) जय–पराजयविषयकप्रश्नविचारः
3) सुख-दुःख विषयकप्रश्नविचारः
4) गमन–आगमन विषयकप्रश्नविचारः
5) गर्भ-अगर्भ विषयकप्रश्नविचारः
6) पुत्र-कन्या विषयकप्रश्नविचारः
7) तेजो-मन्द विषयकप्रश्नविचारः
8) विवाह-विषयकप्रश्नविचारः
9) जनन–मरणविषयकप्रश्नविचारः[103]

एतेषु लाभ–अलाभ, सुख–दुःख, गर्भ–अगर्भ, पुत्र–कन्या, तेजो–मन्द तथैव विवाहप्रश्नानां विचाराः पण्डितरुद्रमणिना प्रथमद्वितीयाध्याये कृतपूर्व एव। अधुना तृतीयेऽध्याये अन्यविषयविचारः क्रियते। सर्वप्रथमम् आगमनप्रश्नस्य विचारः क्रियते -

[103](मूकप्रश्नविचारः.३)

**आगमनप्रश्नः -**

स्त्रिया अथवा पुरुषेन स्वजनसमुदायं परित्यज्य अन्यस्थाने प्रस्थानं क्रियते, किञ्चित् कालं यावत् तयोः सङ्केतः न लभ्यते, पत्रमपि नायाति तर्हि गृहजनाः अतीव दुःखिता भवेयुः। तदा चिन्तामग्नाः ते दैवज्ञं गत्वा तेषां नाम पलायितजनानां क्षेमवार्तां पृच्छन्ति। एवं रूपप्रश्नः आगमनप्रश्नः इत्युच्यते। एतस्मिन् विषये पण्डितरुद्रमणिः प्रश्नशिरोमणिग्रन्थे एवमकथयत् -

**तनुपतिस्तनुतुर्यगतेन चेन्मुत्थसिलं विदधाति तथांगपः।**
**कुरिलकेन्द्रेगतस्तनुमीक्षते स सुखमेति तदा पथिको ध्रुवम्॥**[104]

अर्थात् लग्नेशः यदि लग्नस्य अथवा चतुर्थग्रहेण सह इत्थसालं करोति अथवा वक्री लग्नेशः केन्द्रे (१, ४, ७, १०) स्थित्वा लग्नं पश्यति तर्हि पथिकः सुखपूर्वकं आगच्छेत्। अस्मिन् श्लोके केन्द्रस्थानम् अतिमुख्यमिति मन्यन्ते। अस्य विवरणम् आचार्यवराहमिहिरः एवमवदत् – लग्नात् च्युतिः, चतुर्थभावात् बुद्धिः दशमभावात् प्रवास एवं सप्तमभावात् निवृत्तेः विचारः करणीयः। प्रश्नसमये एतेषु भावेषु स्थितग्रहाणामनुसारेण समस्त शुभाशुभफलं वक्तव्यम्। चतुर्थभावे शुभग्रहस्थिते प्रवासी स्वगृहम् आगतवानिति वक्तव्यम् –

**च्युतिर्लग्नाज्ज्ञेया हिबुकगृहतो वृद्धिरुदिता प्रवासः स्यान्मध्याद्भवति**
**विनिवृत्तिः स्मरगृहात्।**

---

[104](प्रश्नशिरोमणिः.२.आगमनप्रश्नः.१)

**गृहैरेतत्प्रश्नोदयसमयगैवच्यिमखिलं प्रविष्टः स्वं गेहं हिबुकगृहगे प्रोषितपुमान्॥**[105]

अस्मिन् श्लोके लग्नभावात् च्युतेः विचारः कथितः। अर्थात् अधिकार-त्याग-पदहानि-स्थानान्तरण-वर्षागमनबन्धविमोचनेत्यादयः प्रश्नच्युतेः मूलकानि भवन्ति।

चतुर्थस्थाने वृद्धेः विचारः उक्तोऽस्ति। अर्थात् पदवृद्धिः-अधिकारवृद्धिः-धनवृद्धिः-यशोवृद्धिः एवं न्यायस्थानम् अथवा मित्रं, दम्पतिलाभ इत्येवमादयः वृद्धिमूलकप्रश्नाः भवन्ति।

दशमभावात् प्रवासविचारः करणीयः। अर्थात् यात्रा, विदेशगमन, यात्रायां सुख–दुःख एवं लाभ–हानि इत्यादयः प्रश्नाः प्रवासमूलकाः भवन्ति।

सप्तमभावात् निवृत्तेः विचारः करणीयः। अर्थात् यात्रातः पुनरागमनं, रोगान्मुक्तिः, मृत्यु-कष्टनिवृत्तिः तथा तस्करितः अपगतवस्तुप्रापणम् इत्यादयः प्रश्नाः निवृत्तिमूलकाः भवन्ति। एवं रूपेण तस्य ग्रन्थस्य व्याख्याकारः “डा. शुकदेवचतुर्वेदी” कथयति -

**तनुधनसहजस्थाः सर्वखेटा यदि स्युस्तदु पथिक उपैति स्युर्यदा तत्र सौम्याः।**

**हृतगतनरवस्त्वाप्तिर्यदा जीवशुक्रौ द्रुततरमुपयात्येव स्वदेशे हि पान्थः॥**[106]

---

[105](दैवज्ञवल्लभा.१४.१)

[106](प्रश्नशिरोमणिः.२.आगमन प्रश्नः.२)

अर्थात् लग्नात् द्वितीये, तृतीयभावेषु सर्वग्रहाः स्थिताः चेत् पथिकाः आगमिष्यन्ति। यद्युक्तभावेषु केवलं शुभग्रह एव भवेत्तर्हि नष्टवस्तुनः प्राप्तिः तथा अपगतवस्तुनः आगमनम्। यदि केवलं बृहस्पतिशुक्रौ एव पूर्वोक्तभावेषु स्थितौ तर्हि पथिकोऽतिशीघ्रं स्वगृहं प्राप्स्यतीति वक्तव्यम्। परन्तु एतत्श्लोकाधारेण लग्नात् द्वितीये, तृतीयभावेषु प्रवासीजनागमनाय सर्वेषां ग्रहाणां स्थितिः अनिवार्या नास्तीति अस्माकं भाति। परन्तु अस्माभिः ज्ञायते यत् लग्नात् द्वितीये, तृतीयभावेषु त्रिचतुर्ग्रहाः स्थिता चेदपि प्रवासस्य आगमनसूचना लभत एव। यदि सर्वग्रहाणां स्थितिरङ्गीकृतातर्हि श्लोकस्य शेषभागः विरुद्धार्थक एव भवेत्।

पण्डितरुद्रमणिः स्पष्टयति यत् लग्नस्य द्वितीये, तृतीयभावेवा केवलबृहस्पतिशुक्रस्थितिरेव यात्रिकंगृहंप्रापयति नाम नैव गमयतीत्यर्थः। एतेषु स्थानेषु शुभग्रहः स्थितश्चेत् नष्टवस्तुनः प्राप्तिः तथा पलायितस्य आगमनं सम्भाव्यते। बादरायणः कथयति यत् लग्नात् द्वितीय-तृतीयभावेषु ग्रहस्थितिश्चेदपि यात्री पुनरागमनशीलो भवेत्। केचन ग्रहाः सन्त्यपि शीघ्रगमनमेव सम्भाव्यते।

**लग्नाद् द्वितीयभवनं तृतीयं वा ग्रहेण संयुक्तम्।**
**दूरगतस्यागमनं प्रवृत्तिमथवा विनिर्दिशति॥**[107]

[107](प्रश्नविद्या.३६)

बादरायणमतानुसारेण लग्नात् द्वितीयतृतीयभावेषु स्थितः ग्रहः अर्थात् प्राप अथवा शुभग्रहश्चेत् प्रवसितजनागमनसूचना दीयते। वराहमिहिरमतानुसारेण एवं भवति -

**लग्नतः सहजपुत्रवित्तगा दूरगागमनशंसितो ग्रहाः।**
**नष्टलम्भनकराः शुभग्रहाः शीघ्रमागमकरौ तु मन्त्रिणौ॥**[108]

लग्नात् तृतीये, पञ्चमे एवं द्वितीयस्थाने ग्रहस्थितिः तर्हि प्रवासीजनागमनमभिलक्ष्यते। एतेषु स्थानेषु स्थित शुभग्रहः नष्टप्रदार्थस्य लाभं करोति तथैव शुक्रश्चेत् शीघ्रागमनं सुचयति।अस्य श्लोकस्य व्याख्याकरणसमये “डा.शुकदेवचतुर्वेदीमहाभागः” कथयति यत् - एतेषु स्थानेषु शुभग्रहोभवेत्तर्हि गृहात् पलायिताः, अदृश्यं गताः जीवाः गृहं शीघ्रमागमिष्यन्ति इति। निर्जीवपदार्थाः अस्मिन् योगे नैव लभ्यन्ते एव। तेषां सर्वानुसारेण एतेषु योगेषु कुटुम्बस्य, भ्रातुः, बन्धुः एवं सन्तानस्य प्रीतिकारणेन व्यक्तिः स्वदेशानयनप्रभावशालीं भूमिकां पोषयति। आर्यासप्ततिग्रन्थे एवं कथितम् –

**दुश्चिक्यधनसमेतौ गुरुशुक्रावागमं न्नृणाम्।**
**बन्धूपगतावेतौ गृहप्रवेशं क्षणात्कुरुतः॥**[109]

प्रश्नलग्नात् तृतीये वा द्वितीयभावे गुरुशुक्रौ भवेताम् तदा गृहात्दूरस्थितानां सम्पद्यते। यदि गुरुशुक्रौ चतुर्थभावे स्थितौ तर्हि गृहात्दूरस्थितानां अतिशीघ्रमेव गृहं प्राप्स्यन्तीति वक्तव्यम्।

---

[108](दैवज्ञवल्लभा.६.१)

[109](आर्य्यासप्ततिः.१९)

पण्डितरुद्रमणिः लग्नात् द्वितीयतृतीयभावविषये कथयति। परन्तु अन्याचार्याः द्वितीय-तृतीयभावविषये वदन्नोऽपि लग्नं ते नैव अङ्ग्रीक्रियन्ते। केचन द्वितीयतृतीयाभ्यां सह पञ्चमभावमपि अस्मिन् योगे स्वीकुर्वन्ति। परन्तु दैवज्ञजीवनाथस्य मतं तु अन्यथा वर्तते -

**जीवो वा भार्गवो वाऽपि चन्द्रो वा सुखवेश्मनि।**
**पथिकं गृहमायान्तं जानीयात् प्रश्नवित्तदा॥**[110]

चतुर्थभावे स्थितः सौम्यग्रहः शीघ्रमेव प्रवासीजनागमन-सूचनां ददाति। गमनसम्बन्धप्रश्ने अस्य फलं विपरीतं भवेत्। अर्थात् यातुः जनस्य अन्यत्रप्रस्थानं नैव सम्भवेत्। किन्तु प्रश्नसिन्धुकारस्य मतमेवं वर्तते –

**लग्नस्य पार्श्वोपतौ विधोर्वा स्मरस्य वा सौम्यखगौ खगौ वा।**
**एकत्र योगेऽपि गतौ न वेति प्रस्थातुकामो न खलु प्रयाति॥**[111]

लग्नात् चन्द्रः सप्तमभावाद्व्दितीये तथैव द्वादशस्थाने द्वौ शुभग्रहौ स्थितौ तावपि नान्यग्रहैः युक्तौ चेत् यात्राकामुको जनः यात्रां नैव कर्तुं समर्थो भवेत्। यदि पूर्वोक्तस्थाने गुरुः तथा शुक्रः स्थितिस्तर्हि प्रवासी शीघ्रमेव गृहमागमिष्यति। उक्तस्थानेषु अन्यग्रहस्थितश्चेत् प्रवासी दूरदेशं गमिष्यति।

परन्तु प्रश्नमार्गग्रन्थे विरुद्धरूपेण उक्तमस्ति यथा –

---

[110](प्रश्नभूषणम्.४.६)

[111](प्रश्नसिन्धु)

**आरूढे चरभे चतुर्थमृतिगाः सोम्यागृहस्यागमं**
**कुर्वन्त्यर्थसहोत्थगा अपि पुनः प्रस्थाय मार्गागतम्।**
**कर्मेशो विनिवर्तयेन्नवमगो वक्री ततः प्रोषितं**
**मार्गस्थं तमुदीरयेत् द्विष उपेत्यावस्थिते लग्नये॥**[112]

अर्थ (द्वितीयभाव), सहोत्थ (तृतीयभाव ) एतयोः यदि शुभग्रहश्चेत् प्रोषितव्यक्तिः मध्ये मार्गम् आगत्य पुनर्गच्छतीति वक्तव्यम् भवति।

**कश्चिदग्रहः सप्तमगोऽरिगो वा केन्द्रे गुरुश्चागमनं करोति।**
**त्रिकोणगो ज्ञो यदि वा भृगुः स्यात्पांथागमश्चेद्धिमगुर्मृतिस्थः॥**[113]

यदि कोऽपि ग्रहः सप्तमे वा षष्ठभावे स्थितः, केन्द्रे बृहस्पतिस्थितिः पान्थो आगच्छेत्। त्रिकोणे (५, ९) बुधः अथवा शुक्रश्चेदपि अदृश्यव्यक्तिः पुनरागच्छेत्। अत्र पण्डितरुद्रमणिः कथयति यत् लग्नात् षष्ठ–सप्तमभावयोः कोऽपि एक अथवा द्वौ ग्रहौ अर्थात् उभयभावः सग्रहञ्चेत् अथवा एक एव भावः सग्रहश्चेत् केन्द्रे (सप्तमरहित) गुरुश्चेत् प्रोषितागमनं सम्भाव्येत।

एवं प्रकारेण त्रिकोणे बुधशुक्रौ आगमनकारकौ भवतः। सामान्यतया केन्द्रत्रिकोणे शुभग्रहस्थिते ३, ६, ११ स्थानेषु पापग्रहः शुभफलस्य सूचनां ददति। परन्तु त्रिकोणे एकाकीबुधो वा शुक्रोऽपि निवृत्तिकारक एव। पण्डितरुद्रमणिः अस्मिन् लघुश्लोके एव अत्यधिकयोगान् उक्तवान्।

---

[112](प्रश्नमार्गः.२७.४२)

[113](प्रश्नशिरोमणिः.२.आगमनप्रश्नः.३)

1) लग्नगतगुरुः, षष्ठगतः अन्यग्रहः, लग्नगतगुरुः, सप्तमगत ग्रहः, चतुर्थगतगुरुः वा षष्ठसप्तमस्थानयोः ग्रहः एते मिलित्वा चतुरः योगान् कुर्वन्ति।
2) एवं प्रकारेण सप्तमगतगुरुः अथवा षष्ठसप्तमस्थयोः अन्यग्रहस्य द्वौ योगौ, दशमभावगतगुरोः द्वौ योगौ आहत्य अष्टयोगाः भवन्ति।
3) एवं प्रकारेण पञ्चमे वा नवमे बुधस्तथैव, षष्ठे, सप्तमे वा भावे अन्यग्रहचेत् योगद्वयं सम्भाव्यते।
4) पञ्चमे नवमे वा शुक्रः, षष्ठे सप्तमे अन्यग्रहाः चेत् योगद्वयं सम्पद्यते। एवम् आहत्य योगचतुष्टयं। एवमेव पञ्चमे बुधः, षष्ठे ग्रहः, पञ्चमे बुधः, सप्तमे ग्रहः इत्यादि प्रकारेण योगाणां अधिकभेदोऽपि जायते। परन्तु वयं त्रिकोणगतबुधो वा षष्ठसप्तमगतग्रहेण सह द्वौ द्वौ योगौ अङ्गीकुर्म एव। केन्द्रे गुरोः, त्रिकोणे बुधस्य अथवा शुक्रस्यापि सम्बन्धमुररीकृत्यश्लोके अर्थज्ञानेनापि भेदोपजायते।
5) वयं ज्ञास्यामो यत् केन्द्रे गुरुः, त्रिकोणे बुध अथवा शुक्रस्थितिः तर्हि प्रोषितगमनं शास्त्रानुकूलमेव भवति। विषयोऽयं श्रीदैवज्ञवल्लभायाम् एवं प्रतिपादितो वर्तते –

**बृहस्पतौ केन्द्रगते तु कश्चन ग्रहो भवेत् षष्ठगतोऽथ सप्तमः।**
**भवेत्तदा प्रोषित पुरुषागमस्त्रिकोणगे चन्द्रसुते सितेऽपि वा॥**[114]

पण्डितरुद्रमणि कथयति यत् - अष्टमस्थ चन्द्रः केन्द्रे (१, ४, ७, १०) शुभग्रहश्चेत् पापग्रहरहितश्चेत् पथिको लाभपूर्वकसुखं

[114](दैवज्ञवल्लभा.६.२)

गृहमागच्छेत्। द्वितीये, तृतीये, अष्टमे, नवमभावे च शुभग्रहः चरराशौ स्थितश्चेत् प्रवासी पुरुषः मार्गमध्येऽस्तीति ज्ञेयम्। चन्द्रलग्नेशौ द्वादशस्थाने अथवा लग्ने स्थितौ चेत् इत्थसालं करोति तर्हि प्रवासी आगमिष्यति। अन्यप्रकारः चेत् विलम्बेन आगमिष्यति। पञ्चमभावे स्थित चन्द्रः, तृतीयस्थग्रहेण सह इत्थसालं करोत्यथवा सप्तमे-अष्टमे-द्वितीये-चतुर्थभावेषु चन्द्रः चेत् प्रवासी आगमिष्यति। परन्तु एतस्मिन् विषये पृथुयशस्य मतं किञ्चित् भिन्नं भवति–

**अष्टमस्थे निशानाथे कण्टकैः पापवर्जितैः।**
**प्रवासी सुखमायाति सौम्यैर्लाभसमन्वितः॥**[115]

यदि प्रश्नलग्ने अष्टमस्थाने चन्द्रः स्थितस्तथैव केन्द्रे कोऽपि पापग्रहः न भवति तर्हि प्रवासी सुखपूर्वकं पुनरागमिष्यति। यदि अष्टमस्थचन्द्रेण सह शुभग्रहः केन्द्रस्थाने भवेत्तर्हि प्रवासी अधिकंधनमर्जयित्वा परदेशात् आगमिष्यति।

पण्डितरुद्रमणिमतानुसारेण – लग्नचन्द्रौ चरराशौ अथवा चरराशेः नवांशे स्थितौ तथैव केन्द्रे (१, ४, ७, १०) ५, ११, ३ भावेषु शुभग्रहे स्थिते सति प्रवासी आगच्छेद्येव। यदि ३, ५, ६, ९, ७ भावेषु वक्री ग्रहः स्थितस्तर्हि प्रवासी शीघ्रागमनं करिष्यति। पृष्ठोदयराशिस्थ चन्द्र (मेष-कर्क-मकर-धनु-मीन-मकरराशिगत-चन्द्र) लग्नस्य ग्रहेण सह इत्थसालं भवति चेत् स पथिकः शीघ्रमेव आगमिष्यति। ९, ४, २, ७ गृहस्वामिभिः सह चन्द्रस्य इशराफ अथवा मुथसिलयोगश्चेत् प्रवासी सन्तोषेण आगमिष्यति। यदि मार्गेशः राशेः

---

[115](षट्पञ्चाशिका.५.३)

परार्धे अस्ति तर्हि विदेशगतपुरुषः शीघ्रमेव निःसन्देहेन आगमिष्यति। ९, ४, २, ७ भावानामधिपतीनां सह अथवा चतुर्थग्रहात् नीचगृहे स्थितग्रहेण सह चन्द्रस्य इत्थसालं करोति चेत् बलाधिक्येन अर्थात् ग्रहाणामधिकबलकारणेन विदेशगतपुरुषस्य आगमनं किञ्चिद्विलम्बेन सम्पद्यत इति वक्तव्यम्।

प्रवासी आगमिष्यति वा न वेति विचारकरणान्तरम् अधुना अदृश्यव्यक्तिः तस्मिन्नेव प्रदेशेऽस्ति वा अथवा कुत्रापि गतवान् वा इत्यस्मिन् विषये चर्च्यते।

**कदैष्यतीति प्रश्ने विचारः -**

अधुना प्रवासी कदा गृहमेष्यतीति विषये प्रश्नशिरोमणि ग्रन्थे केचन योगाः उक्ताः यथा – लग्नगतः शुभग्रहः यदा तृतीयभावे तिष्ठति तस्मिन्नेव समये पथिको गृहमागमिष्यति। यदि चन्द्रः सप्तमभावं त्यक्त्वा केन्द्रात् (१, ४, ७, १०) आगमनगृहे यस्य समयगोचरतां गच्छेत् तस्मिन्नेवसमये प्रवासी पुनरागच्छेत्। यः कोऽपि बलवान् ग्रहः लग्नात् यस्मिन् गृहे तिष्ठति, तस्य गृहस्य सङ्ख्यां बहिस्तात् गणने यः शेषः अवशिष्यते तत्सङ्ख्याकदिनेषु प्रवासी पुनरागमिष्यति। उदाहरणार्थं द्वितीयभावे बलवान् ग्रहश्चेत् द्वितीयभावस्य सङ्ख्या २ इति भावयित्वा तं द्वादशसङ्ख्यया सह गणनकरणे सति चतुर्विंशतिषु दिनेषु प्रवासी गृहमागमिष्यति। यदि सः ग्रहः वक्री तर्हि गणतेदिने आगत्य पुनः एष्यति।

परन्तु पृथुयशः कथयति यत् यदा सः योगकारकग्रहः वक्री भवेत्तदा प्रवासी पुनरागमिष्यति।[116] परन्तु वराहमिहिराचार्यस्य मतानुसारेण वक्रीग्रहः लग्नात् यावत् गृहमागच्छेत् तावत्सु दिनेषु प्रवासी पुनरागमिष्यति।[117] अस्मिन् प्रसङ्गे रावणसंहितागत-श्लोकमेकं पश्यामः -

**लग्नाधिपस्यागमनप्रदायिनो ग्रहस्य वान्यस्य गतिस्तु यादृशी।**
**मन्दाथ मध्या त्वरिताऽथवा तदा अनागतस्यागमनेऽपि तादृशी॥**[118]

अत्र लग्नेश अथवा आगमनकारकः अन्यग्रह इव मन्दा, मध्या, शीघ्रगतिश्चेत् प्रवासिनः पुनरागमनगतिरपि तथैव भवतीति कल्पना करणीया।

सूर्यसिद्धान्तस्य स्पष्टाधिकारे ग्रहाणामष्टप्रकारकगतिः कथिता वर्तते। १) वक्री, २)अतिवक्री, ३) विकला, ४) मन्दा, ५)मन्दतरा, ६) समा, ७) शीघ्रा, ८) शीघ्रतरा चेति।

**वक्राऽतिवक्रा विकला मन्दा मन्दतरा समा।**
**तथा शीघ्रतरा शीघ्रा ग्रहाणामष्टधा गतिः॥**[119]

---

[116]ग्रहो विलग्नाद्यतमे गृहे तु तेनाहता द्वादश राशय स्युः।
तावद्दिनान्यागमनस्य विद्यात् निवर्तनं वक्रगतैर्ग्रहैस्तु॥ (षट्पञ्चाशिका.५.५)
[117]गृहे ग्रहो यावति लग्नतो भवेत्तदा हता द्वादश राशयः स्फुटम्।
अवेहि तावद्दिवसैर्गतागभं निवर्तनं वक्रगतग्रहेण॥ (दैवज्ञवल्लभा.६.११)
[118](रावण संहिता. प्रवासी आगमन.पृ.सं.११२२)
[119](सूर्यसिद्धान्तः.२.१२)

एवमुक्तमस्ति यत् एतासु अष्टप्रकारकगतिषु अतिशीघ्र-शीघ्र-मन्द-मन्दतर-समाः ऋज्वी अर्थात् मार्गी भवन्ति। तथैव वक्र-अनुवक्र-कुटिलाः वक्रगतिसम्बन्धिताः भवन्ति।[120]

अस्मिन् विषये आचार्यत्रयाणाम्मतं तुलना क्रियते चेत् पृथुयशवराहमिहिरस्यापेक्षया पण्डितरुद्रमणोः अभिप्रायः अधिकतुल्यरूपेण अस्ति। अस्याभिप्रायस्य अधिकबलं दातुं **श्रीमदमरसिंहःअमरकोशे** वक्रस्य अर्थं एवं प्रदत्तः।

**अरालं वृजिनं जिह्ममूर्मिमत्कुञ्चितं नतम्।**
**आविद्धं कुटिलं भग्नं वेल्लितं वक्रमित्यपि॥**[121]

अग्रे गत्वा पण्डितरुद्रमणिः कथयति यत् सप्तमेशः लग्नं यदा प्राप्नोति अथवा लग्नेशेन सह इत्थसालं करोति तस्मिन्नेव समये प्रवासी स्वगृहमागच्छेत्तथैव चरराशिगतयोगश्चेत् विशेषं कृत्वा अर्थात् चरलग्नश्चेत्, लग्नेशसप्तमेशौ चरराशिगतौ चेत् प्रवासी सुखपूर्वकधनसहितं गृहमागमिष्यति। यदि चतुर्थस्थाने चरराशिगत बृहस्पतिबुधशुक्रग्रहास्तर्हि अतिदूरगतप्रवासी अपि सकाले गृहमागमिष्यति।

**दूरस्थ जीवितप्रश्नः -**

लग्नेशचन्द्रौ षष्ठ–अष्टम–चतुर्थभावेषु स्वनीचराशिगतौ तथैव अस्तं न गच्छतः तथा अष्टमेशेन सह इत्थसालं करोतः चेत् पापग्रहैः युक्तौवा तदा दूरदेशगतपुरुषस्य मरणं निश्चयेन भवेत्।

---

[120]तत्राविशीघ्रा शीघ्राख्या मन्दा मन्दतरा समा।
ऋज्वीति पञ्चधा ज्ञेया या वक्रा सातिवक्रगा॥ (सूर्यसिद्धान्तः.२.१३)

[121](अमरकोशः.३.विशेष्यनिध्ववर्गः.२१६६, २१६७)

अत्र मृत्युशब्दात् मरणतुल्यम् अथवा घोरकष्टमपि ज्ञेयम्। यतः शास्त्रेषु मृत्युः अष्टप्रकारकः इत्युक्तः। पञ्चस्वरग्रन्थानुसारेण –

**व्यथा दुःखं भयं लज्जा रोगः शोकस्तथैव च।**
**मरणं चापमानं च मृत्युरष्टविधः स्मृतः॥**[122]

१) व्यथा, २) दुःखम् , ३) भयम्, ४) लज्जा, ५) रोगः, ६) शोकः, ७) मरणम्, ८) अपमानः एते मृत्योः अष्टप्रकाराः भवन्ति। प्रश्नशिरोमणिग्रन्थे – यदि चन्द्रः चतुर्थभावे नीचस्थाने स्थित वक्रीग्रहेण सह इत्थसालं करोति तर्हि तथैव शुभग्रहात् अदृष्टश्चेत् दूरस्थ पुरुषस्य मृत्युः जातः इति मन्तव्यम् तथैव शुभग्रहः षष्ठे, अष्टमे, द्वादशभावेषु निर्बलत्वेन पापग्रहैः दृष्टश्चेत् एवं चन्द्रसूर्यौ लग्ने स्थितौ तर्ह्यपि विदेशी म्रियते एव। पृष्ठोदयलग्नः त्रिकोणे (५, ९) पापग्रहयुक्तः अथवा केन्द्रे (१, ४, ७, १०) अष्टमषष्ठभावयोः वा पापग्रहः शुभग्रहदृष्टिरहितश्चेत् प्रवासी म्रियते एव। सूर्यः नवमस्थाने स्थितश्चेत् प्रवासी रोगयुक्त एव। अयं विषयः रावणसंहितायामेवं कथितः यत् –

**सदसद्भिर्नवमगतैः प्रवाससमये शुभाऽशुभं वाच्यम्।**
**प्राप्त गतौ धनगतैरस्तस्थैर्जिगमिषोस्तथा स्वगृहम्॥**[123]

एवं प्रकारेण नवमस्थाने स्थित शुभग्रहेभ्यः यात्राकालीन-शुभम् अशुभफलं वा वक्तव्यम् तथा अष्टमसप्तमस्थानयोः स्थितग्रहात् गृहसम्बन्धितशुभाशुभं वक्तव्यम्। प्रश्नशिरोमणिग्रन्थे

---

[122](पञ्चस्वरा)

[123](रावण संहिता.६.प्रवासी आगमन-पृ.सं.११२३)

– चन्द्रः शुभग्रहयुक्तः अथवा दृष्टश्चेत् चतुर्थस्थाने अर्थात् एकादशे, द्वादशे, लग्ने, द्वितीये तथा तृतीयभावेषु स्थीयमानग्रहेण साकम् इत्थसालं करोति चेत् विदेशगतपुरुषः सुखधनयुक्तः सन् जीवेदिति वक्तव्यम्।

**यात्राप्रश्नः -**

कस्यापि कार्यविशेषस्य उद्देश्येन स्वनगरम् अथवा ग्रामात् अन्यदेशगमनस्य एवनाम यात्रा। एतत्सम्बन्धिन्प्रश्नाः एव यात्राप्रश्नाः। अस्मिन् विषये पण्डितरुद्रमणेः कथनं यत् –

**उदये यदि चरराशिर्द्रेष्काणे वा नवांशस्य लग्ने।**
**यद्वा खेटे चरभे दशमाद्भ्रष्टे प्रवासचिंता स्यात्॥**[124]

अर्थात् लग्ने यदि चरराशिश्चेत्तथवा लग्ने चरराशिगतद्रेष्काण वा नवांशे चेत् अथवा चरराशिगतः कोऽपि ग्रहः दशमभावात् अग्रिमभावे गच्छेत्तर्हि प्रश्नकर्तुः यात्रायाः चिन्ता भवतीति वक्तव्यम्। विषयममुम् अन्ये आचार्याः अपि अङ्गीकुर्वन्ति। यथा वराहमिहिरात्मजःपृथुयशः कथयति यत् – प्रश्नलग्ने चरराशिः अथवा चरराशिगत नवांशश्चेत् प्रवासस्य विषये चिन्ता वक्तव्या तथैव प्रश्नलग्ने दशमस्थानात् अग्रे चरराशौ कोऽपि ग्रहः आगच्छति चेदपि प्रवासचिन्ता भवेत् तथैव[125] फलितमार्तण्डनामकग्रन्थे एवं कथितमस्ति –

---

[124](प्रश्नशिरोमणिः.२.यात्राप्रश्नः.१)

[125](षट्पञ्चाशिका.७.९)

**अनुयोगतनौ गमो द्रुतं चरभे सिद्धिरभीप्सिता शुभे।**
**स्थिरभे न गमागमौ द्विमे सममत्रेन्दुदृशोऽनुगं फलम्॥**[126]

अर्थात् यात्राप्रश्नं लग्नचरः स्थितस्तथैव शुभस्वामिना दृष्टियुक्तस्तर्हि शीघ्ररूपेण यात्रा भवेत्। प्रश्नःस्थिरलग्ने स्थिते गमनागमनं नैव भवेत्। यदि प्रश्नः द्विस्वभावराशौ स्थितः सम अर्थात् गमनागमनं विलम्बेन भवेत्।

परन्तु पण्डितरुद्रमणिः विषयममुं नैवाङ्गीकरोति। तस्याभिप्रायानुसारेण केवलं चरस्थितिगतलग्नादेव फलं न वक्तव्यम् परन्तु फलस्य दृढतायै ते पण्डिताः लग्नगत क्रूरसौर्यग्रहाणामपि विचारयेयुः। एतदर्थं एते एवं कथयन्ति यत् – लग्नचन्द्रौ चरराशिगतौ सौम्यग्रहैःदृष्टौ अथवा युक्तौ चेत् प्रश्नकर्ता गन्तव्यमेव तथैव जयप्राप्तिरपि सम्भाव्यते। यदि लग्नचन्द्रौ स्थिरराशिगतौ चेत्तथा शुभग्रहैः युक्तौ अथवा दृष्टौ तर्हि गमनं नैव सम्यक् भवेत् स्वस्थाने स्थिते चेत् विजयप्राप्तिर्भविष्यति। यदि लग्नचन्द्रौ द्विस्वभावराशिगतौ तर्हि यात्राकरणे कुगतिः, विघ्नाः, पराजयकारणेन न पुनर्गच्छेदेव। यदि लग्नचन्द्रौ द्विस्वभावराशिगतौ तथा शुभग्रहैः युक्तौ वा दृष्टौ तर्हि यात्राकरणेन अल्पसुखं, अल्पंधनप्राप्तिर्जायते। पापग्रहयुक्तचरलग्नश्चेत् गमनसमये क्लेशः, रोगश्च भवेत्। यदि द्विस्वभावलग्नं बृहस्पतिना युक्तं तदा मार्गमध्यस्थादेव पुनरागमिष्यते। विषयममुम् अन्याचार्याः सर्वे अङ्गीकुर्वन्त्येव।

---

[126](फलितमार्ताण्ड.२२.१०७)

**षष्ठत्रिकोणसंस्थैः पापैश्च पापसंदृष्टैः।**
**गमनागमनं च वाच्यं स्थिरलग्ने चेच्चरे तु विपरीतम्॥**[127]

लग्ने स्थिरराशिश्चेत्तथा ५, ६ एवं नवमस्थानेषु स्थितपापग्रहस्योपरि पापग्रहदृष्टिश्चेत् गमनागमनं नैव भवेत्। चरलग्नश्चेत् अस्य विपरीतं वक्तव्यम्। परन्तु पण्डितरुद्रमणेः कथनं यत् यदि बलवान् स्थिरलग्नश्चेत् पापग्रहः शत्रुग्रहैः दृष्टश्चेत् अतिविघ्नकारणेन गमनं नैव सम्भाव्यते तथैव यः शीर्षोदयः (सिंहः, कन्या, तुला, वृश्चिकः, कुम्भः) राशिगतलग्नश्चेत् गन्तव्यमेव। लग्नं स्थिरराशिगतश्चेदपि गन्तव्यम् तथैव चन्द्रलग्नौ पृष्ठोदयराशिसम्बन्धित (मेष, वृषभ, कर्क, धनु, मकर) श्चेत् यात्रा नैव सम्पद्यते इति पण्डितरुद्रमणिः कथयति। अस्य योगस्य विषये श्रीमन्नारायणदासस्य कथनं किञ्चित् भिन्नं भवति। यथा–

**शीर्षोदये स्याद् गमनस्थिरोऽपि चिरेण नैवागमनं प्रवासात्।**
**पृष्ठोदये चागमनं स्थिरं च प्रष्टुः प्रवासो न भवेत्स्वधाम्नः॥**[128]

यदि शीर्षोदयः लग्नश्चेत् गमने आलस्यं तथा आगमनमपि शीघ्रमिति वक्तव्यम्। परन्तु पृष्ठोदयः लग्नश्चेत् प्रवासी विलम्बेनागमिष्यते अथवा गृहात् प्रस्थानमेव नैव कुर्यात्।

प्रश्नशिरोमणिग्रन्थे अग्रे कथयति यत् यः लग्नं स्थिरस्तथा पृष्ठोदय (वृषभः) राशौ चेत् अतिशीघ्रे विपरीतयात्रा अर्थात् लक्ष्यात् विपरीतदिशायाम् गमनं भवेत्। यदि चरलग्ने (मेषः, कर्कः, मकरः)

---

[127](दैवज्ञवल्लभा.४.६)

[128](प्रश्नवैष्णवः.७.६)

शीघ्रयात्रा भवेत्तथा द्विस्वभावे धनुश्चेत् विघ्नसहितगमनं भवेदिति श्रीमन्नारायणदासोऽपि अङ्गीकरोत्येव।

प्रश्नशिरोमणिग्रन्थे कथितं यत् नवमेशः लग्नेशो वा चन्द्रेण सह कदाचित् इत्थसालयोगे भवतःतदागन्तव्यम्। अस्मिन् योगे लग्नगतपापग्रहात् यात्रा नैव सम्पद्यतेति प्रश्नवैष्णवे वर्तते।[129]

पण्डितरुद्रमणेः कथनं यत् लग्नेशो वा चन्द्रो नवमभावे स्थितः शीघ्रमेव गमनमारम्भणीयम्। यदि नवमेशः लग्ने तथैव लग्नेशः केन्द्रे (१, ४, ७, १०) अथवा तृतीयभावे तर्हि यात्रा भवेदेव। ताजिकनीलकण्ठीये एवं कथितमस्ति – नवमेशः लग्ने , लग्नेशेन सह इत्थसालं करोति चेत् यात्रा नैव सम्भवेत्।[130] परन्तु पण्डितरुद्रमणिः अमुं नाङ्गीकृत्य एवं कथयति यत् यदि अस्मिन् योगे नवमेशः निर्बलेः चेदपि यात्रा नैव सम्पद्यतेति वक्तव्यम् इति।[131]

प्रश्नशिरोमणिग्रन्थे – नवमेशः लग्नेशस्य शुभग्रहेण सह इत्थसालं करोति तथैव पापग्रहः लग्ने स्थिते अथवा केन्द्रे चन्द्रः लग्नेशस्य केन्द्राधिपतिग्रहेण सह इत्थसालं करोति तथैव पूर्वोक्तपापग्रहोऽपि लग्ने स्थितश्चेत् यात्रा नैव भवेत्। यदि नवमभावे नवमेशः तथा चन्द्रात् अदृष्टश्चेत् तथा पापग्रहः सप्तमभावे स्थितस्तर्हि गन्तुः अर्थकार्यनाशनेन गमनं नैव कार्यम्। पापग्रहः दशमभावे तदा स्वज्येष्ठबन्धो अथवा स्वामिनः तिरस्कारेण गमनं

---

[129](प्रश्नवैष्णवः.७.१०)

[130](ताजीकनीलकण्ठी.प्रश्नतन्त्र.भावनिरूपणं.९६)

[131](प्रश्नशिरोमणिः.२.यात्राप्रश्नः.८)

नैव कर्तव्यम्। यदि पापग्रहः लग्ने स्थितस्तर्हि यात्रा शुभदायिका नैव संभाव्यते। लग्ने दुर्धरायोगः चेत् स्वगृहस्थज्येष्ठजनाभिप्राय अङ्गीकृत्य नैव गच्छेत्। अत्र दुर्धरायोगस्य लक्षणं ज्योतिषशास्त्रानुसारमेवमस्ति –

**द्विजपतेर्धनगैः सुनफा भवेद्व्ययगतैरनफा रविवर्जितैः।**
**दुरुधराः खचरैरुभयस्थितैर्मुनिवरैरुदिता महदादरात्॥**[132]

यदि सप्तमभावे दुरुधरा योगश्चेत् अर्थात् प्रश्नलग्नात् षष्ठे वा अष्टमभावे शुभग्रहस्थिते तर्हि प्रवासी स्वस्य कस्यापि मित्रात् अथवा स्वस्वामिनः आज्ञाया नैवागच्छेत्। स एव दुरुधरायोगः पापग्रहैः निर्मितश्चेत् प्रवासी रोग–शत्रु–चोर-शोककारणात्पुनर्नैवागमिष्यति। यदि लग्नेशः लग्नं न पश्यति तथैव पापग्रहः लग्नेशं न पश्यति तथा लग्नेशः केन्द्रगतेन कस्यापिग्रहेण सह इत्थसालं करोति चेत् प्रवासी कदापि नैवागच्छेत्।

प्रश्नशिरोमणिग्रन्थे कथितं यत् – लग्ने पापग्रहोदयश्चेत् रोगात्भयं जायते तथैव पापग्रहः तृतीये, षष्ठे, एकादशभावेषु स्थितश्चेत् पृच्छकस्य यात्राद्वारा शतृनाशो भवेत्। चतुर्थभावे पापग्रहश्चेत् मार्गात् पुनरागमिष्यति। केन्द्रे पापग्रहस्थितश्चेत् कार्यस्य विनाशो भवेत्। विषयममुं श्रीनीलकण्ठदैवज्ञोऽपि अङ्गीकरोति। यदि लग्नेशनवमेशयोः इत्थसालं भवति तर्हि शुभग्रहैः मित्रदृष्ट्या दृष्टश्चेत् सुखेन जयं तथैव अर्थसिद्धिरिति।

---

[132](जातकाभरणम्.चन्द्रयोगाध्यायः.१पृ.सं.१९६)

यदि षष्ठेशद्वादशेशौ क्रूरग्रहाः चेत् बन्धनं, रोगः, लग्नेशः क्रूरग्रहश्चेत् मृत्युः, अष्टमेशसप्तमेशौ क्रूरग्रहौ तर्हि शत्रुचोरात् भयम्। यदि लग्नेशः द्वादशे भवेत्तर्हि चौर्यं, रोगभयं तथैव लग्नं पापग्रहेण युक्तं चेत् मृत्युभयं जायते। तथैव शुभग्रहः लग्नेशः बलवान् चेत्तथा लग्नेशनवमेशयोः इत्थसालं भवति चेत् शुभफलं सम्पद्यते।

प्रश्नवैष्णवग्रन्थे कथितं यत् – यदि सप्तमभावे शुभग्रहः स्थितः तदा यात्राया रमणीयधन–वाहनादि प्राप्तिः जायते। यदि चतुर्थे तथा दशमभावे च शुभग्रहः विराजमानं यात्रया शुभकार्यं सिद्धं भवेत्तथा तस्य फलस्वरूपं तस्य धनसौख्यलाभप्राप्तिं ददाति।[133] विषयममुं पण्डितरुद्रमणिरपि अङ्गीकरोति। तस्य अभिप्रायानुसारेण – यदि शुभग्रहः केन्द्रे (१, ४, ७, १०) स्थाने स्थितः तदा गमनं शुभदायकं भवति। द्वितीयस्थाने चेत् लाभः, चतुर्थे चेत् सिद्धिः, एवं प्रकारेण चन्द्रादपि फलं वक्तव्यम्। तदनन्तरं भावानां फलनिर्णयः करणीयः।

यदि लग्ने शुभग्रहश्चेत् शरीरसुखं, चतुर्थे चेत् सुख–अर्थ–भोज्यवस्तु–मनोरथसिद्धिः, पञ्चमभावे तर्हि सुखम् विजयं तथा अर्थलाभः, सप्तमे चेत् अर्थसिद्धिः, स्थानवस्त्रादि प्राप्तिः, दशमे चेत् धनवाहनप्राप्तिः एकादशे चेत् कार्यसिद्धिः, सुखधनलाभः भवेदिति

[133] सुभेस्तगे यत्र च याति गन्ता तत्रास्ति रम्यं धनवाहनादि।
सौख्ये नभस्थे शुभकार्यसिद्धिः कार्यात् फलाप्तिर्धनसौख्यलाभः॥
(प्रश्नवैष्णवः.७.१९)

प्रश्नशिरोमणिः कथयति।[134] परन्तु ताजिकनीलकण्ठीये कथितं यत् – शुभग्रहे दशमगते सति कार्यसिद्धिः, सप्तमस्थशुभग्रहात् गन्तव्यस्थाने शुभता, चतुर्थस्य शुभग्रहात् कार्यपरिणामं शुभप्रदः भवेत्।[135]

**नौकागमप्रश्ने विचारः -**

यात्रा त्रिप्रकारिका भवति। प्रथमा धार्मिकयात्रा, यस्य विचारः नवमस्थानात् क्रियते। द्वितीया नित्यजनसाधारणयात्रा, यस्य विचारः सप्तम-तृतीयस्थानाभ्याम् क्रियते। तृतीया विशेषप्रकारकजल अथवा समुद्रयात्रा, यस्य विचारः तृतीयासप्तमषष्ठभावेभ्यः तथा द्वादशभावात् क्रियते। विषयोऽयं चन्द्रदत्तपन्तमहोदयः स्पष्टीकरोति।[136] एवं तृतीयप्रकारक जल अथवा समुद्रयात्रा विषये करणप्रश्नान् नौकाप्रश्नाः इति कथ्यन्ते। अस्मिन् विषये ताजिकनीलकण्ठीये कथितं वर्तते यत् – प्रश्नलग्नात् शुभग्रहः, केन्द्रस्थ-बलहीनपापग्रहः तृतीय–षष्ठ–एकादशस्थाने स्थितः चेत् सकुशलरूपेण नौकायात्रात् धनलाभः सम्पद्यते।[137] परन्तु पण्डितरुद्रमणेः विचारः अस्माद्भिन्नः दृश्यते यथा –

---

[134](प्रश्नशिरोमणिः.२.यात्राप्रश्नः.१७)

[135](ताजीकनीलकण्ठी.प्रश्नतन्त्र.भावनिरूपणं.१०३)

[136](प्रश्नचण्डेश्वरः.प्र.यात्राप्रश्नः)

[137]नौर्लाभदा समान्मम नेति पृष्टे केन्द्रे शुभाश्चेदितरेषु पापाः।
बलोज्झिताः क्षेमजयार्यदा नौर्भाविति वाच्यं विदुषा विमृश्य॥
(ताजीकनीलकण्ठी.प्रश्नतन्त्र.नौकाप्रश्नः.१७३-पृ.सं.१७३)

**विवीर्यैः खलैः षट्त्रिधर्मान्त्यसंस्थैः सवीर्यैः शुभैः क्षेमतोऽभ्येति नौका।**
**चरर्क्षोदये केन्द्रगेन्दौ च शीघ्रं यदा पापिनः केन्द्रगा वीर्ययुक्ता॥**[138]

अर्थात् निर्बलो पापग्रहः तृतीय–षष्ठ–नवम–द्वादशभावयोः स्थितस्तथा शुभग्रहः बलवान् चेत् नौका कुशलरूपेण पुनरागच्छेत्। तथैव केन्द्रगत चन्द्रः चरलग्ने (मेषः–कर्कः–तुला-मकरः) स्थितश्चेत् नौका शीघ्रमागच्छेत्। तथैव केन्द्रे (१, ४, ७, १०) पापग्रहः बलवान् चेत् शुभग्रहः निर्बलस्तथा सद्बलेन इशराफयोगं करणशीलः चन्द्रः तथा बृहस्पतिः अस्तङ्गतः चेत् नौका समुद्रे निमग्नां भवेत्। यदि शनिसम्बन्धित इत्थसाले स्थितश्चेत् कुजः लग्ने वा अष्टमे तथा केन्द्रे सूर्येण दृष्टस्तर्हि केन्द्राधिपतिः पापग्रहयुक्तस्तर्हि मनुष्य तथा वस्तुसहितनौका निमग्नो भवेत्। यदि केन्द्रस्वामी कुजः तथा शनियुक्तश्चेत् केचन जनाः समुद्रे म्रियन्ते। यदि चन्द्रः अथवा बृहस्पतिः पापयुक्तस्तर्हि नौका भग्नरूपेण बहिरागच्छेत्। यदि अस्मिन् योगे मृत्युयोगः भवेत्तर्हि सुखेनागच्छेत्। तथैव यः अस्य योगस्य विलोमं अर्थात् सिद्धयोगश्चेत् सुखेन नागच्छेत्। विषयोऽयं शास्त्रोक्तरीत्या सम्पद्यते। विषयेऽस्मिन् श्रीपद्मप्रभुसूर्यपि एवं कथयति -

**क्षेमागमनपृच्छायां मृत्युयोगोऽस्ति चेत्तदा।**
**क्षेमेणायाति नौः पण्यलाभो व्ययहृतौ भवेत्॥**[139]

---

[138](प्रश्नशिरोमणिः.२.नौकागमप्रश्नः.१)

[139](भुवन दीपक.१४१)

अर्थात् नौकायाः सकुशलपुनरागमनप्रश्ने यदि मृत्युयोगः भवति तर्हि नौका कुशलतापूर्वकमागच्छेत् तथैव वस्तुव्यापारे लाभः जायते। श्रीकाशीनाथोऽपि मृत्युयोगे नियममेकं कथितवान् यथा –

**क्रूरग्रहदशायां च क्रूरस्यान्तर्दशा यदा।**
**शत्रुयोगे भवेन्मृत्युर्मित्रयोगे च संशयः॥**[140]

अर्थात् यदि क्रूरग्रहदशायां क्रूरग्रहान्तर्दशा तर्हि तथैव शत्रुयोगे मृत्युयोगश्चेत् मित्रयोगे मृत्युर्भवेदिति संशयो जायते।

पण्डितरुद्रमणिः अग्रे गत्वा एवं कथयति – यदि केन्द्राधिपतिः शनियुक्तस्तर्हि नौकां चोरपाहृता स्यात्। द्वितीयभावे कुजश्चेत् नौका जलस्थबडबाग्निना दग्धा भवेत्। यदि चन्द्रलग्नेशयोः परस्परं शतृदृष्टिस्तर्हि नौकास्वामिनाम्मध्ये कलहो जायते। यदि चन्द्रलग्नेशौ अष्टमनवमनीचस्थानेषु अथवा शत्रुराशौ अस्तङ्गतौ तर्हि धनक्षयो भवेत्। लग्नेशः एकादशस्थाने बलिष्टश्चेत् अथवा एकादशभावे बलवान् स्थितस्तथा शुभग्रहयुक्तश्चेत् विक्रयेण लाभो जायते। चन्द्रलग्नेशौ तथा अष्टमेशः एकत्र स्थितौ चेत् नौकायाः, नौकाधिपतेः मृत्युर्भवेत् अथवा उभयोः बन्धनं सम्भाव्यते। तत्तत्स्थानसम्बन्धितस्वामी पापग्रहः चेत् विशेषरूपेण उक्तफलं सम्भवेत्। परन्तु विषयेऽस्मिन् ताजिकनीलकण्ठीये एवं कथितमस्ति यथा – लग्नेशः अथवा अष्टमेशः सप्तमस्थाने स्थितः तर्हि नौका जले निमग्ना भवेत् परन्तु प्राणिसंरक्षणन्तु सञ्जायते। यदि लग्नेशः

[140](लग्न-चन्द्रिका.३.दिनदशाः -३)

अथवा अष्टमेशः सप्तमस्थाने स्थितःतर्हि नौकागतवस्तूनि जले मग्नानि भवन्ति। नौकाचालकः नावा सहितः गृहं प्रत्यागच्छेत्।[141]

**राज्यलाभप्रश्नः -**

राजा अथवा राज्यसम्बन्धितप्रश्नाः राजप्रश्नाः इति कथ्यन्ते। यदि काऽपि व्यक्तिः अमुं राज्यं लभते वा न वा? यः लब्धः सः ध्रुवं भवति उत न वा? एतादृशप्रश्नाः राज्यलाभप्रश्नाः इति कथ्यन्ते। एवं प्रकारक प्रकरणसमये द्वादशषु भावषु किं किं विचारणीयमिति विषये प्रश्नमार्गः स्पष्टयति यथा –

**मूर्तिः कोशो धात्विनो वहनानि मन्त्रः शत्रुर्मार्ग आयुर्मनश्च।**
**व्यापारश्य प्राप्तिरप्राप्तिरेवं लग्नाद्भावा भूमिभर्तुर्विचिन्त्याः॥**[142]

अर्थात् लग्नादि द्वादशभावेभ्यः क्रमशः राजशरीरराजकोशालय–सेना–वाहन–परामर्श–शत्रु–विचारधारा–आयु-शासकस्य चित्तवृत्ति–शासनप्रणाली-राज्यप्राप्तिः तथा व्ययविचारः करणीयः भवति।

**चक्रम्-३.१**

| **व्ययः** | **मूर्तिः** | **कोषः** | **सेना** |
|---|---|---|---|
| **राज्यप्राप्तिः** | **भूपतिप्रश्ने द्वादशभावविचारः** | | **वाहनम्** |
| **राजकार्यम्** | | | **मन्त्रः** |
| **मनः** | **आयुः** | **मार्गः** | **शत्रुः** |

[141](ताजीकनीलकण्ठी.प्रश्नतन्त्र.भावनिरूपनम्.१७९)

[142](प्रश्नमार्गः.१४.१९)

अस्य राज्यलाभप्रश्नस्य एकः मुख्ययोगः लघुपाशरीत्यभिधानान्तरप्रसिद्धः उडुदायप्रदीपस्थ राजयोगाध्याये एवमुक्तं वर्तते –

**कर्मलग्नाधिनेतारावान्योऽन्याश्रयसंस्थितौ।**
**राजयोगाविति प्रोक्तं विख्यातो विजयी भवेत्॥**[143]

अर्थात् एकः अन्यस्मिन् स्थाने स्थितः दशमेशः तथा लग्नेशात् राजयोगः सम्पद्यते। अनेन सः जातकः लोके प्रख्यातो विजेता च भवेत्।

योगममुं पण्डितरुद्रमणिरपि अङ्गीकरोति। परन्तु अस्मिन् राजयोगे चन्द्रस्य युक्तिरपि अवश्यमिति मन्यते। यथा चन्द्रलग्नेशौ बलवान्तौ भूत्वा दशमभावे शुभग्रहैः दृष्टैः अथवा युक्तौ चेत् तदा दशमेशः लग्ने स्थितस्तर्हि राज्यप्राप्तिर्भवेत्।[144] विषयेऽस्मिन् श्रीपद्मप्रभुसूरिः स्वीयाभिप्रायमेवं प्रकटयति यथा –

**परस्परदृष्टिमात्रेण अर्धयोगं विनिर्दिशेत्।**
**चन्द्रदृष्टिं विना ज्ञेयं शुभं पादफलं बुधैः॥**[145]

अर्थात् लग्नेशदशमेशयोः केवलं परस्परदृष्टिद्वारा अर्धयोगः वक्तव्यः तथैव चन्द्रस्य दृष्टिं विना राजयोगस्य शुभफलं एकपाद (१/४) मिति वक्तव्यम्। लग्नेशकार्येशयोः परस्परं शत्रुता चेदपि उभौ चन्द्रेण युक्तौ चेत् अर्धफलमिति वक्तव्यम्।

---

[143](उडुदायप्रदीपः.६.१)

[144](प्रश्नशिरोमणिः.२.राज्यलाभप्रश्नः.१)

[145](भुवन दीपक.७७)

प्रश्नशिरोमणिग्रन्थे राज्यलाभप्रश्नस्य द्वितीययोगे कथितं वर्तते यथा दशमाधिपतिः चन्द्रो वा लग्नेशेन सह इत्थसालं भवति चेत् राज्यप्राप्तिः भवेदिति उक्तं वर्तते। परन्तु श्रीनीलकण्ठदैवज्ञस्य मतानुसारेण – एतादृशयोगे सम्पद्यमाने सति स्वकुलपरम्परा अर्थात् वंशानुगतानुसारेणैव राज्यप्राप्तिः भवेत्।[146]

ग्रन्थकर्ता प्रश्नशिरोमणिग्रन्थे अग्रे कथयति यत् उच्चस्थानस्थशुभग्रहः दशमभावं पश्यति चेत् राज्यप्राप्तिर्भविष्यति। यदि चन्द्रलग्नेशदशमेशौ शुभग्रहैः दृष्टौ वा युक्तौ, तथा शुभग्रहः स्वोच्यस्थाने स्थितः तर्हि निश्चयेन राज्यप्राप्तिः। यदि बृहस्पतिः बलवान् तथा उच्चस्थाने अथवा शुभग्रहैः दृष्टो वा युक्तस्तर्हि चन्द्रः समबली अथवा अल्पबलवान् चेत् प्रष्टुः भ्रमणेन नाम अतिकष्टेन राज्यप्राप्तिः। विषयममुं श्रीमन्नारायणदासोऽपि अङ्गीकृत्य कथयति यत् ---

**देवार्चिते वीर्ययुते शुभान्विते सौम्येक्षिते वाप्यशुभैरसंयुतै।**
**निशाकरे मध्यबलेऽथवा बले राज्यं भवेच्चङ्क्रमणेन पृच्छतः॥**[147]

यदि प्रश्नकुण्डल्याम् देवगुरुः बृहस्पतिः बलवान्, स्वोच्चादिस्थाने स्थितस्तथा शुभग्रहैः वीक्षितस्तर्हि राज्यलाभः जायते। परन्तु अस्मिन् योगे चन्द्रस्यापि पूर्णबलत्वमपेक्ष्यते। चन्द्रस्य मध्यबलत्वम् अथवा निर्बलत्वे सत्यपि चङ्क्रमणद्वारा राज्यप्राप्तिः सम्पद्यते। तस्मिन्नेव ग्रन्थे अन्ययोगोऽपि एवं कथितः – यदि कोऽपि शुभग्रहः स्वराशि अथवा उच्चराशिगतः वा

---

[146](ताजीकनीलकण्ठी.प्रश्नतन्त्र.भावनिरूपणं.१०९)

[147](प्रश्नवैष्णवः.३.४)

लग्ने स्थितस्तथा शेषशुभग्रहाः नवमे-पञ्चमे-एकादशभावेषु बलरूपेण तिष्ठन्ति तर्हि अचिन्तितरूपेण राज्यप्राप्तिः भविष्यति। यदि एते ग्रहाः तेषु स्थानेषु स्वर्क्षादिग्रहेषु स्थितास्तर्हि अल्पमात्रायां राज्यप्राप्तिः भवेत्।[148] परन्तु अस्य योगस्य विषये पण्डितरुद्रमणेः मतमेवं वर्तते यथा -

**शुभः शेषैस्त्रिकोणा ये बलिभिः परमोन्नतिः।**
**अचिन्तिता स्वभादिस्थैः किञ्चिदूना प्रकीर्तिता॥**[149]

लग्ने लग्नेशः स्वराशौ अथवा स्वोच्चस्थानद्वारा दृष्टश्चेत् क्रमेण राज्यलाभः सम्पद्यते अथवा दशमेशलग्नेशौ लग्ने स्थित्वा शेषशुभग्रहाः बलरूपेण नवमपञ्चमद्रेष्काणभावेषु न स्थिते तर्हि परमोन्नतिर्भवेदिति चिन्तनीयम्। स्वराज्ये भवेच्चेत् पूर्वोक्तत्वात् किञ्चित् कार्यम् उन्नतिं गच्छति। यदि मीनलग्ने बृहस्पतिः, शुक्रः, बुधः इत्यादयः ग्रहाः भवन्ति तर्हि राज्यप्राप्तिः भवेत्।

श्रीमन्नारायणदासः कथयति यत् – यदि प्रश्नलग्नं मीनश्चेत् तस्मिन् गुरुशुक्रौ क्रमशः स्वक्षेत्री तथा उच्चस्थाने तिष्ठतः तदैव लाभस्थाने कुजः अर्थात् मकरराशौ कुजः स्वोच्चस्थानं प्राप्नोति तदा राज्यप्राप्तिः भवेत्।[150]

---

[148]स्वोच्चस्थितो लग्नगतो शुभग्रहः शेषैस्त्रिकोणाय गतैर्बलान्वितैः।
अचिन्तिता राज्यपदाप्तिरुन्नतिः स्यादल्पकं
स्वर्क्षग्रहादिसंस्थैः॥(प्रश्नवैष्णवः.३.१०)

[149](प्रश्नशिरोमणिः.२ राज्यलाभप्रश्नः ५)

[150](प्रश्नवैष्णवः.३.११)

पण्डितरुद्रमणिनोक्तयोगे बुधः यदि मीनलग्नेस्थितः तर्हि बुधः चतुर्थसप्तमस्थानाधिपतिः अर्थात् केन्द्राधिपति भूत्वाऽपि नीचस्थानं प्राप्नोति। परन्तु श्रीमन्नारायणदासस्य मतानुसारेण कुजः क्रूरग्रहश्चेदपि धनं कर्मभावायोरधिपतिरूपेण लाभस्थाने प्राप्यमाणः उच्चोभूत्वा शुभकारक एत्यनुमीयते।

प्रश्नशिरोमणिग्रन्थे एवं कथितं वर्तते – यदि बृहस्पतिः केन्द्रगतस्तथा शीर्षोदयराशिषु (सिंहः, कन्या, तुला, वृश्चिकः, कुम्भः) चन्द्रशुक्रबुधग्रहास्तर्हि सम्यक् राज्यप्राप्तिः संभाव्यते। यदि दशमेशः लग्ने स्थित्वा केनापि शुभग्रहेण सह इत्थसालं करोति तर्हि राज्यप्राप्तिः भवेत्।

प्रश्नशिरोमणिग्रन्थे – यदि बृहस्पतिलग्नेशचन्द्राः शत्रुग्रहैः पापग्रहैः वा पीडितास्तर्हि राजान्तरं राज्यं बलेन स्वाधीनं करिष्यति। लग्नेशयुक्तशुभराशौ शुभग्रहस्थितश्चेत् राज्यं तथैव अर्थप्राप्तिः च भवेत्। यदि लग्नेशः शुभग्रहाः च अस्तङ्गतास्तर्हि कदापि राज्यप्राप्तिर्न भविष्यत्येव। लग्नेशः निर्बलो भूत्वा षष्ठे अथवा द्वादशभावे स्थितः अथवा दशमेशः अष्टमेशस्य एताभ्याम् उभाभ्यां सह इत्थसालं भवति चेदथवा केन्द्रे (१, ४, ७, १०) वा अष्टमस्थाने पापग्रहस्थितिश्चेत् राज्यप्राप्त्यनन्तरं राज्ञः बन्धनं स्यात्। व्ययेशदशमेशौ शनैश्चरस्य चतुर्थे अथवा सप्तमस्थाने स्थितौ तदा राज्यप्राप्तिः किञ्चित् भाव्यते। परन्तु राजा, तस्मात् राज्यात् शीघ्रं विनाशं प्राप्नोति। लग्नेशः दशमे अथवा लग्ने स्थितः तदा कुजः उच्चस्थाने चेत् राज्यप्राप्तिः भवत्येव। यदि चन्द्रः बली भूत्वा केन्द्रे (१, ४, ७, १०) शुभग्रहैः सह नीचं न गच्छति चेत् राज्यप्राप्तिः,

नीचगतचन्द्रश्चेत् जातकः कदापि राज्यं न लभत्येव।[151] अस्य योगस्य विषये श्रीमन्नारायणदासस्य मतमेवं वर्तते -

**केन्द्रे हिमांशौ स्वगृहे स्वतुङ्गे वापीत्थशालं कुरुतेऽम्बरेशः।**
**लग्नाधिपे चाथ चतुष्टयस्थे प्रष्टुस्तदा स्यात् खलु राज्यलाभः॥[152]**

यदि चन्द्रः स्वराशौ (कर्क) अथवा उच्चराशौ (वृषभ) स्थित्वा केन्द्रे (१, ४, ७, १०) स्थितस्तर्हि कर्मेशात् (दशमेशः) ऋद्धिशालयोगं करोति तथैव लग्नेशोऽपि केन्द्रे स्थितश्चेत् प्रश्नकर्तुः राज्यलाभसूचको भवेत्।

**युद्धप्रश्नः – जयपराजयप्रश्नः -**

**विलग्नलग्नाधिपतिः पुरेशौ यामित्रयामित्रपतिश्च यायी।**
**स्ववर्गराज्ञो जयदो बलीयान् यस्ताजिकचार्यमते प्रदिष्टः॥[153]**

प्रश्नलग्ने लग्नलग्नेशपुरेशानाम् अथवा पुरनगरदेशस्य राज्ञः सूचकं भवेत्। सप्तमभावः तथा सप्तमेशः यायी अर्थात् आक्रमणकारीणां सूचको भवेत्। एवं प्रकारेण एतयोः उभयोः यः बलवान् भवति तस्मिन् पक्षे विजयश्री सिध्यतीति ताजिकाचार्यस्य मतं भवति। विषयममुमाधारीकृत्य पण्डितरुद्रमणिः कथयति यथा -

**तनुसप्तदशोपगाः शुभाश्चेत्पुरनाथस्य जयाय चेत्कुजार्की।**
**नवमे किल पृच्छकस्य नेष्टौ ज्ञसितेज्या इह तज्जयाय नूनम्॥[154]**

---

[151]बली हे केन्द्रे स शुभो विपामरःपदप्रदो निन्द्य विधुः कदापि नो।
सुरेज्यलग्नेश्वररात्रिपा यदा परार्दिता अन्यतृपः पदं हरेत्॥
(प्रश्नशिरोमणिः.२.राज्यलाभप्रश्नः.८)

[152](प्रश्नवैष्णवः.३.१३)

[153](प्रश्नवैष्णवः.५.१)

अर्थात् लग्नस्य सप्तमदशमभावयोः शुभग्रहस्थितिश्चेत् पुरस्य राज्ञः जयं तथा कुजशनैश्चरौ नवमभावे स्थिते तर्हि प्रष्टुः पराजयः तथैव नवमभावे बुधशुक्रबृहस्पतिग्रहाः स्थिताश्चेत् प्रष्टुः पक्षस्य पुरराजस्य विजयः सम्भवेत्। उक्तपूर्वविषयोऽयं यत् लग्नस्थानं यायी, सप्तमस्थानं स्थायी एवं दशमस्थानम् उभयात् केन्द्रस्थानमिति।

यदि लग्नस्य शुभग्रहः सप्तमस्योपरि पूर्णदृष्टिः स्थापयति तथैव सप्तमस्य शुभग्रहः सप्तमस्थानं बलयुक्तं करोति। दशमस्थ शुभग्रहः सप्तमस्थानात् चतुर्थे शुभरूपेण स्थायीसम्बन्धितपक्षं प्रबलमाददाति। अस्मिन् योगे सप्तमे तथा दशमे शुभग्रहस्थापनम् अनिवार्यं भवति। यदि लग्ने तथा दशमे शुभग्रहस्थितिस्तर्हि यायीपक्षस्य प्रबलता सिद्धा भवति। एवं प्रकारेण नवमस्थानस्य सप्तमे अर्थात् स्थायी राज्ञः पराक्रमस्थानं भवति तदा तत्र कुजो वा शनिः तर्हि तस्य राज्ञः पराक्रमहानिः कुर्यात् अथवा शुभग्रहः तस्य पराक्रमं वर्धयेत् च। तथापि नवमे कुजशनिग्रहौ शोकप्रदौ भवतः। नवमे पापग्रहः विशेषतया लग्न अर्थात् यायी राज्ञः भाग्यभावः हानिमापद्यन्ते। विषयममुं बादरायणोऽपि स्वप्रश्नविद्यायां कथितवान्।

**उदये वा जामित्रे मेषूरणसंस्थितेषु सौम्येषु।**
**नगराधिपस्य विजयं प्रवदेन्नास्त्यत्र सन्देहः॥**[155]

---

[154](प्रश्नशिरोमणिः.२.जयपराजयप्रश्नः -१)

[155](प्रश्नविद्या.५.६७)

यदि प्रश्नलग्ने दशमे, सप्तमे, अथवा लग्ने शुभग्रहस्थितिस्तर्हि निश्चयेन आक्रमणात् पीडितव्यक्तेः (स्थायी) विजयः भविष्यति। अत्र नास्ति सन्देहः। तथैव अस्य श्लोकस्य पूर्वस्मिन्श्लोकेऽपि एवं कथितमस्ति यत् – प्रश्नलग्नस्य दशमे एकादशे अथवा द्वादशभावेभ्यः एकस्यापि स्थाने पापग्रहस्थितिश्चेत् युद्धे पुरराजस्य स्वराजधान्यानि नशनामाप्नुयुः।

पण्डितरुद्रमणिः आचार्यबादरायणस्य मतस्य विपरीतं प्रकटयति यथा द्वादशे-एकादशे-दशमे पापग्रहस्थितिश्चेत् गमनसमये राजा भयाकुलो भवेत्। तृतीय-चतुर्थ-पञ्चम-षष्ठ-सप्तम-अष्टमस्थानेषु यदि शुभग्रहस्थितिः तर्हि पुरराजस्य विजयः सम्भाव्यते। तथैव ते ग्रहाः शेषस्थानेषु स्थितास्तर्हि गमनसमये राज्ञः विजयाय अनुकूल्यन्ते। अस्मिन् विषये पण्डितरुद्रमणिः स्वमतमपोदबलन् बादरायणेन कृतनियमस्य अपवादं प्रकटयन् च एवं कथयति –

**चेदम्बरात्षट्कगृहेषु सौम्येन्दुलग्नपाः पौरजयाय नूनम्।**
**चेच्छेषषट्के विधुसप्तमेशसौम्यास्तदा यायिपतेर्जयाय॥**[156]

अर्थात् प्रश्नलग्ने दशमस्थानात् तृतीयस्थानपर्यन्तं षड्राशीनां स्थायीराजानम् अभिव्यनक्ति। चतुर्थस्थानात् नवमस्थानपर्यन्तं षड्राशयः यायी अर्थात् आक्रमणकारिणः पक्षस्य प्रतिनिधित्वं प्राप्नुवन्ति।

---

[156](प्रश्नशिरोमणिः.२ जयपराजयप्रश्नः ६, ७)

दशमस्थानं गृहीत्वा षट्भावेषु (१०, ११, १२, १, २, ३) शुभग्रहः चन्द्रः, लग्नेशः भवेत्तर्हि पुरराजस्य विजयः सम्पद्यते।तथैव षट्भावेषु (४, ५, ६, ७, ८, ९) चन्द्रः, सप्तमेशः, शुभग्रहः इत्यादयः भवन्ति तर्हि यायी राजा निश्चयेन विजयं प्राप्नुयात्।

अस्मिन् विषये श्रीमन्नारायणदासः शुभग्रहं, चन्द्रं, लग्नेशञ्च न स्वीकृत्य केवलं लग्नेश तथा शुभग्रहमेव सङ्गृहीतवान्।[157] अन्ये सर्वे एकधा एव भवन्ति।परन्तु अस्मिन् सन्दर्भे पृथुयशः स्थायी वा यायी पक्षस्य भागविभागः भिन्नभिन्नप्रकारेण अङ्गीकरोति।

**पौरास्तृतीयभवनाद् धर्माद् वा यायि नरशुभैश्चशुभदाः।**
**व्ययदशमाये पापः पुरस्य नेष्टाः शुभा यातुः॥**[158]

अर्थात् प्रश्नलग्नस्य तृतीयस्थानात् अष्टमस्थानपर्यन्तं षट्सुराशीषु क्रमेण (३, ४, ५, ६, ७, ८) सर्वे शुभग्रहाः स्थिताः चेत् नगरवासिनः राजभ्यः शुभं भवेत्। एवं प्रकारेण नवमस्थानात् द्वितीयस्थानपर्यन्तं षट्सुराशिषु (९, १०, ११, १२, १, २) सर्वे शुभग्रहाः स्थिताः चेत् यायीराजाय शुभं भवति। पृथुयशस्य मतमिदम् आचार्यवराहमिहिरः, आचार्यभट्टोत्पलः च अङ्गीकुरुतः।

---

[157]मेषूरणात्षड्भवनेषु चन्द्रो लग्नेशसौम्यैश्च जयेत्पुरेशः।
रसातलात्षड्भवनेषु चन्द्रो जायेशसौम्यैश्च जयेच्च यायी॥(प्रश्नवैष्णवः.५.१०)
[158](षट्पञ्चाशिका.३.२)

द्वादशः, एकादशः, दशमः इत्यादि स्थानेषु पापग्रहः स्थितिस्तर्हि यायीराजाय भयप्रदा एव। अनेन आचार्यबादरायणस्य नियमापवादत्वं प्रस्फुटं भवति। यदि शुभग्रहः पुरुषसंज्ञकराशिषु (मिथुनः-तुला-कुम्भः-कन्या-धनोः पूर्वार्द्धः) केन्द्रे ( १, ४, ७, १०) स्थितः तथैव तान् शुभग्रह एव पश्यति तर्हि उभयोः सङ्गमं भवेत्। आचार्यवराहमिहिरस्य मतानुसारं एषः योगः तदा सम्पद्यते यदा केन्द्रस्थाने पुरुषराशिषु शुभग्रहस्य दृष्टिर्भवेत्।[159]

प्रश्नशिरोमणिग्रन्थानुसारेण लग्नाधिपतिस्तथा लग्नाधिपति स्थितस्थानस्याधिपतिग्रहः उदितः बलवान् भवति चेत् पुरराजस्य विजयः भवेत्। तथैव सप्तमाधिपतिस्तथा सप्तमाधिपतिस्थितस्थानाधिपतिग्रहः उदितः, बलीतर्हि यायीराजस्य विजयः भवेत्। यदि लग्नेशसप्तमेशयोः मित्रदृष्ट्या इत्थसालयोगः तर्हि युद्धं नैव भवेत्। तथैव मित्रदृष्टिरहितलग्नेशसप्तमेशयोः इत्थसालं भवति चेत् पूर्णं युद्धं भवेत्। अस्मिन् विषये ताजिकनीलकण्ठीये एवमुक्तं वर्तते। यथा -

राज्ञां युद्धसमये प्रश्नलग्नगतग्रह अथवा लग्नेशराशिगतः अन्यग्रहेण सह चन्द्रस्य इत्थसालात् प्रष्टुः राज्ञः विजयः भवेत्।

---

[159]केन्द्रस्थिता यदि शुभा यदि वा भवन्ति लग्ने नृराशिभवने शुभदृष्टि पुष्टः।
प्रीतिस्तदा भवति पापविलोकितैस्तु पापैरमीषु भवनेषु भवेद्विरोधः॥
(दैवज्ञवल्लभा.७.६)

अथवा उभयो सप्तमस्थः वा सप्तमेशयुक्त चन्द्रेण सह इत्थसालयोगं भवति तर्हि प्रश्नकर्तुः राज्ञः शत्रोः विजयः भवेत्।[160]

प्रश्नशिरोमणिग्रन्थानुसारेण लग्ने पुरुषसंज्ञकराशि (मिथुनः-तुला-कुम्भः-कन्या-धनुः एतेषां पूर्वार्धः) श्चेत् शुभग्रहः एकादशे, द्वादशभावगतश्चेत् उभयोः राज्ञोः युद्धं सम्पद्यते। तथैव यः पापग्रहः द्विस्वभावराशिषु (वृषभः-सिंहः-वृश्चिकः-कुम्भः) भवेत्तर्हि सम्पूर्णयुद्धं सम्भाव्यते। अस्मिन् विषये आचार्य वराहमिहिरः अन्यत् मतं प्रकटयति। यथा -

**लग्ने नृशशिभवने यदि सन्ति सौम्याः केन्द्रव्ययायभवनेष्वशुभा भवन्ति।**
**सन्धिस्तदा द्रुततरं प्रवदेन्नराणां पापैर्द्विदेहग्रहणैस्तु विरोधमाहुः॥**[161]

यदि लग्ने पुरुषराशौ शुभग्रहः तथा केन्द्रेः, व्यये, लाभस्थाने पापग्रहः तर्हि कलहमानजनानां शीघ्रमेव सन्धिः सम्भाव्यते। द्विस्वभावराशौ पापग्रहः भवति चेत् तेषु शीघ्रं विरोधः सम्पद्यते।

अस्मिन् योगे पण्डितरुद्रमणिः एकादशद्वादशस्थानयोः स्थितशुभग्रहविषये कथितवान् परन्तु आचार्य वराहमिहिरः लग्ने शुभग्रहस्तथा एकादशद्वादशयोः एवं केन्द्रे (१, ४, ७, १०) पापग्रहविषये च अकथयत्। अन्यत्सर्वम् एकविधमेव। प्रश्नशिरोमणिग्रन्थानुसारेण लग्नेशः चरराशिगतः तथा सप्तमभावे निर्बलश्चेत् पुरराजा पराक्रमरहितः, उद्यमरहितश्चेति ज्ञातव्यम् ।

---

[160](ताजीकनीलकण्ठी.प्रश्नतन्त्र.भावनिरूपणं.८३)

[161](दैवज्ञवल्लभा.७.५)

अस्मात् योगात् विपरीतयोगः प्रश्नवैष्णवग्रन्थे दृश्यते यथा – यदि सप्तमेशः लग्ने चरराशिगतस्तदा यायीराजः निरुपायः, निस्सहायी, निर्बलो भवेत्।[162]

प्रश्नशिरोमणिग्रन्थानुसारेण सप्तमेशः चरराशौ (मेषः-कर्कः-तुला-मकरः) स्थितश्चेत् गमनशीलः राजा वीर्यरहितः, बलरहित इति ज्ञातव्यः। तथैव यः लग्नेशः स्थिर (वृषभः-सिंहः-वृश्चिकः-कुम्भः) लग्ने स्थितश्चेत् पुरराजः पूर्णवीर्यवान्, सुन्दरः, बलयुक्तः इति ज्ञेयम्। एवं प्रकारेण सप्तमेशः सप्तमस्थाने स्थितश्चेत् गम्यमानः राजा वीर्यसहितेति वक्तव्यम्। दशमेशे लग्ने स्थिते स्थायीराजस्य सेना सहायशीला तथा यः चतुर्थेशे सप्तमस्थाने स्थिते यायीराजस्य सेना सहायशीलः भविष्यति। परन्तु अस्मिन् विषये श्रीनीलकण्ठदैवज्ञः सप्तमगतचतुर्थेशं न गृहीत्वा धनुवा मेषराशिगतसप्तमभावात् शत्रोः सहायतां कथयति। यथा लग्नगतदशमेशात् प्रश्नकर्ता विजयी, धनुर्मेषौसप्तमगतौ चेत् शत्रोः सहायता इति वक्तव्यम्।[163] प्रश्नशिरोमणिग्रन्थानुसारेण – कुजः, चन्द्रः, शनिः, सूर्यः, राहुः इत्यादयः ग्रहाः अथवा एतेषु त्रयो वा ग्रहाः लग्ने स्थिता चेत् यायीराजः पुरस्थायिनं हन्ति। यदि पूर्वोक्तग्रहाः (कुजः, चन्द्रः, शनिः, सूर्यः, राहुः) सप्तमभावे स्थितास्तर्हि पुरस्थायीराजः यायीराजानं हन्ति। अस्मिन् योगे श्रीनीलकण्ठदैवज्ञः

---

[162](प्रश्नवैष्णवः.५.७)

[163](ताजीकनीलकण्ठी.प्रश्नतन्त्र.भावनिरूपणं.९५)

शनिं न स्वीकृतवान्।[164] तथैव अन्ये सर्वे विषयाः पण्डितरुद्रमणेः तुल्या एव।

प्रश्नशिरोमणिग्रन्थानुसारेण – यदि शुक्रबृहस्पतिबुधग्रहाः अथवा बृहस्पतिशुक्रौ बलसहितौ लग्ने स्थितौ तर्हि पुरस्थायीराजः यायीराजस्य सेनां विनाशयति। बुधः, चन्द्रः, शुक्रः, बृहस्पतिः एते सर्वे ग्रहाः अथवा एतेषु त्रयः ग्रहाः वा बलयुक्तः सप्तमभावे स्थिताश्चेत् यायीराजा स्थायीराजानं शीघ्रमेव मारयति। तथैव चतुर्थदशमभावयोः शुभग्रहे स्थिते उभयोः सङ्गमो जायते।लग्ने केतुः, सूर्यः, कुजः, तथा अष्टमभावे लग्नेशः, शनैश्चरः, चन्द्रः अथवा विपर्यस्थश्चेत् तथापि शुभग्रहः बलवान् चेत् उभयोः नाशः भवतीति स्पष्टमेव। अस्मिन् योगे श्रीमन्नारायणः शनिचन्द्राभ्याम् सह राहोः युक्तमपि अङ्गीकरोति।[165] परन्तु अत्र कोऽपि दोषः नास्ति यतः पण्डितरुद्रमणिः सूर्यकुजाभ्याम् सह केतुग्रहमुक्तवान्। अस्य तात्पर्यमिदमस्ति यत् राहुः सप्तमे एव भवेत् किमर्थमित्युक्ते एतयोः उभयोः छायाग्रहयोः मध्ये सर्वदा १८०°दूरं भवति।

प्रश्नशिरोमणिग्रन्थानुसारेण - लग्ने चन्द्रकुजयोः इत्थसालं भवति चेत् युद्धे पुरस्थायीराजस्य बन्धनं वा मरणं वा सम्भवेत्। तथैव यः सप्तमभावे एष योगो भवेत्तर्हि यायीराजस्य मृत्युः ध्रुवम्। यदि लग्ने चन्द्रस्य वा सूर्यस्य पापग्रहेण सह इत्थसालं भवति तर्हि बृहतियुद्धं सम्भविष्यति। वक्री ग्रहः निर्बलः तथा अवक्री ग्रहः बलवान् भूत्वा केन्द्रे (१, ४, ७, १०) शनिशुक्रग्रहौ भवतः चेदपि युद्धं भविष्यति।

---

[164](ताजीकनीलकण्ठी.प्रश्नतन्त्र.भावनिरूपणं.४६)

[165](प्रश्नवैष्णवः.५.१६)

स्वराशिसम्बन्धित उच्चराशौ कुजः (मेषः, वृश्चिकः, मकरः), सूर्यः (मेषः, सिंहः) च स्थितौ तथा चन्द्रः दशमस्थः चेत् यावत्पर्यन्तं दिनं भवति तावत्युद्धं भवति। योगममुमन्याचार्या अपि अङ्गीकुर्वन्त्येव।

**कुजे स्थिरे केन्द्रगते रणः स्यात् द्विदेहगेकाल्पतरश्चरे वा।**
**राह्विवत्थशालेऽथ शिखीत्थशाले सूर्येन सन्धिं बहुशत्रुमृत्युः॥**[166]

यदि स्थिरराशिगतकुजः केन्द्रे स्थितस्तर्हि युद्धं भविष्यति। द्विस्वभावगतकुजः केन्द्रवर्ती चेत् अल्परणं सम्भविष्यति। यदि कुजः केन्द्रे चरराशिगतश्चेत् तर्हि अल्पतरमरणं सम्भविष्यति। तथैव केन्द्रस्थ कुजेन सह राहुः, केतुः तथा सूर्यस्य ऋद्धिशालं भवति चेदपि सन्धिः विना भयङ्करयुद्धं भवेत्। तथैव अधिकसङ्ख्याकाः सैनिकाः म्रियन्ते। विषयममुं पण्डितरुद्रमणिरप्यङ्गीकरोति। परन्तु योगेऽस्मिन् प्रश्नशिरोमणेः मतमेवं वर्तते –

योद्धानां मरणानन्तरं राज्ञोः मध्ये सन्धिः भवेत्।[167] तथैव लग्नः स्थिरराशिगतस्तथा शुभग्रहः स्वोच्चराशिगतः, बलवान् चेत् पापग्रहरहितस्स्यात्। शुभग्रहः लग्ने चेत् चन्द्रस्य शुभग्रहेण सह इत्थसालं भवेत्तर्हि युद्धं भविष्यति। परन्तु अस्मिन् विषये श्रीमन्नारायणदासस्य मतं किञ्चिद्भिन्नं भवति यथा –

यदि प्रश्नलग्नः स्थिररूपेण स्थित्वा केन्द्रे सौम्यग्रहः स्वक्षेत्रे अथवा उच्चराशिगतस्तर्हि पापग्रहदृष्टिरहितः, युक्तरहितश्चेत् चन्द्रः

---

[166](प्रश्नवैष्णवः.५.२१)

[167](प्रश्नशिरोमणिः.२.जयपराजयप्रश्नः.१३)

शुभग्रहवर्गे स्थितः अथवा शुभग्रहैः ऋद्धिशालयोगं करोति चेत् युद्धं नैव भविष्यति।[168]

प्रश्नशिरोमणिग्रन्थानुसारेण – यदि एकादशद्वितीयभावौ शुभग्रहैः दृष्टियुक्तस्तर्हि पुरराजस्य सेनायाः संवर्धनं स्यात्। पञ्चमाष्टमभावौ शुभग्रहदृष्टियुक्तौ चेत् यायीराजस्य सेना वर्धते। लग्नस्य द्वितीये, दशमे, एकादशभावेषु शुभग्रहः भवति चेत् पुरस्थायीराजस्य सहायकः बलवान् भवेत्। लग्नेशः अष्टमे स्थित्वा अष्टमाधिपतिना सह इत्थसालं करोति चेत् नगरस्य राजा म्रियते। सप्तमेशः – द्वितीयभावे स्थित्वा धनेशेन सह इत्थसालं करोति चेत् यायीराजस्य मृत्युः भविष्यति। लग्नेशः बलवान् भूत्वा द्वादशभावे चरराशिगतश्चेत् (मेषः, कर्कः, तुला, मकरः) पुरराजा म्रियते। सप्तमेशः बलवान् भूत्वा द्वादशभावे चरराशिगतश्चेत् यायीराजा विजयं प्राप्य म्रियते।

**लग्नेश यामित्रपयोश्च मध्ये भवेत् ग्रहो यः स्वगृहोच्चसंस्थः।**
**तद्वर्गमर्त्यान्नृपयोश्च सन्धिर्ज्ञेयो बुधैर्लेखकपण्डिताभ्याम्॥**[169]

अर्थात् लग्नेशसप्तमेशयोः मध्ये कोऽपि अन्यग्रहः स्वक्षेत्री अथवा उच्चस्थाने स्थितश्चेत् तदा मध्यवर्तीग्रहः यस्य वर्गस्य प्रतिनिधित्वं करोति तस्य जातेः मध्यस्थव्यक्तिद्वारा कागजपत्रलिखितद्वारा सन्धिः सम्भाव्यते।

---

[168](प्रश्नवैष्णवः.५.२२)

[169](प्रश्नवैष्णवः.५-२७)

परन्तु पण्डितरुद्रमणेः मतम् अस्मात् किञ्चिद्भिन्नं दृश्यते। यथा - लग्नेशसप्तमेशयोः मध्ये यः कोऽपि ग्रहः बलवान् चेत् सः निजवर्गस्य पुरुषद्वारा उभयोः राज्ञोः सन्धिं करोति मूलश्लोके "निजवर्गनरात्" शब्दः अस्ति, अस्य तात्पर्यमिदमस्ति – मध्यवर्तिग्रहः यस्याः जातेः प्रतिनिधित्वं करोति तस्य वर्गस्य अथवा जातेः मनुष्यस्य मध्यस्थता सह सन्धिं संपादयति। ज्योतिषे ग्रहनियमानुसारेण वर्गाणां प्रतिनिधित्वं भवति। यथा –

सूर्यः – क्षत्रियः, वैद्यः, अधिकारी, राजा इत्येतेषां प्रतिनिधित्वं करोति।

चन्द्रः – वैश्यः, स्त्रीवर्गः इत्यादीती प्रतिनिधिः।

कुजः – क्षत्रियसैनिकगुप्तचरपाचकानां प्रतिनिधिः।

बुधः – ब्राह्मणः, पुरोहितः, साधुः, धर्माचार्यः मन्त्रीणां च प्रतिनिधित्वं करोति।

गुरुः – ब्राह्मणः, वृद्धः मन्त्रीणां प्रतिनिधिः।

शुक्रः – ब्राह्मणः, स्त्रीवर्गः, द्यूतकारः मन्त्रीणां प्रतिनिधिः।

शनिः – शूद्रः, विकलाङ्गी, पङ्गुः इत्यादीनां प्रतिनिधिः।

राहुः – म्लेच्छाप्रतिनिधिः।

केतुः – म्लेच्छ, अन्त्यजातीनां प्रतिनिधिः।

अर्थात् सूर्ये मध्ये स्थिते राजा, चन्द्रः मध्ये स्थिते कञ्चुकी, बुधश्चेत् पण्डितचतुरपुरुषलेखया, कुजश्चेत् राज्ञा, शुक्रश्चेत् प्रवरात्,

शनिश्चेत् वृद्धस्त्रीद्वारा सन्धिप्रबन्धो जायते। एतस्मिन् विषये प्रश्नवैष्णवग्रन्थे कथितं वर्तते यत् गुरौ मध्ये स्थिते मन्त्री अथवा पुरोहितद्वारा, यदि सूर्यः स्त्रीभ्यः, चन्द्रश्चेत् द्वारपालकस्थव्यक्तिद्वारा, शनिश्चेत् वृद्धस्त्री मुख्यभूमिकारूपेण सन्धिकार्ये भवेत्। भौमश्चेत् उभयोः राज्ञोः एकस्मात् सन्धिप्रस्तावना सम्भाव्यते।

प्रश्नशिरोमणिग्रन्थानुसारेण – यदि शनिः लग्ने स्थित्वा सप्तमेशेन सह इत्थसालं करोति तर्हि यायीराजः सन्धिं करोति। लग्नेशः सप्तमे, दशमे अथवा चतुर्थभावे स्थित्वा सप्तमेशेन सह इत्थसालं करोति चेत् स्थायीराजः सन्धिं करोति। अस्मिन् विषये ताजिकनीलकण्ठीये एवं कथितं वर्तते यथा -

**लग्नपतावस्तपते षट्त्रिदशायमुत्थशिले द्वयोः स्नेहः।**
**वर्गद्वयमध्याधः पतितः सोऽन्येन बध्यः स्यात्॥**[170]

अर्थात् प्रश्नलग्नस्य सप्तमेशेन सह तृतीये, षष्ठे, दशमे, एकादशस्थाने स्थितस्य लग्नेशस्य सप्तमेशेन सह इत्थसालं भवति तर्हि युद्धे उभयोः राज्ञोः सन्धिः भवेत्।

प्रश्नशिरोमणिग्रन्थानुसारेण – यदि सप्तमभावे पापग्रहः स्थितिस्तर्हि उभयोः राज्ञोः समता भवेत्। यदि बलवान् पापग्रहः द्वादशभावे स्थितस्तर्हि पुरस्य राजा यायीकृते धनं ददाति तथैव अस्मात् विलोमार्थात् षष्ठभावे बलवान् पापग्रहस्तर्हि यायीराजः पुरं प्राप्य नगरराजं धनं ददाति। उक्तस्थाने यस्य राज्ञः यः ग्रहः बलवान्

[170](ताजीकनीलकण्ठी.प्रश्नतन्त्र.भावनिरुपणम् .८८-पृ.सं.३८१)

सैव ग्रहो फलं ददाति। लग्नेशः द्वादशे स्थितश्चेत् पुरस्य राजा तथैव सप्तमेशः षष्ठे स्थितश्चेत् यायीराजः पलायिताः भवेयुः। आचार्य वराहमिहिरः लग्ने एवं द्वादशस्थानसम्बन्धे एकं विशेषयोगं कथयति -

**वृषवृश्चिककर्कटैर्नृणामनुकूलैरपि लग्नमाश्रितैः।**
**गमनं च वदन्त्यशोभनं मुनयोऽन्त्यर्क्षसमाश्रितैरपि॥**[171]

युद्धयात्रायां यदि वृषभः, वृश्चिकः, कर्कराशयः अनुकूलाश्चेदपि लग्ने एवं द्वादशस्थाने अशुभं भवेदिति मुनिजनानाम् अभिप्रायः।

**दिग्विजयप्रश्ने विचारः -**

**सिते तनौ सुते गुरौ सुखे बुधे त्रये रवौ।**
**परैः खगभवे नृपो विजित्य चैत्यरीन् द्रुतम्॥**[172]

यदि लग्ने शुक्रः, पञ्चमे बृहस्पतिः, चतुर्थे बुधः, तृतीये सूर्यः, शेषग्रहः एकादशे स्थितास्तर्हि राजा शीघ्रमेव शतृन् जित्वा स्थानं प्राप्स्यति। लग्ने कुजस्तथा शनिः, पञ्चमे बृहस्पतिः, एकादशे बुधः, दशमे शुक्रो वा सूर्यः तदा प्रश्नकर्तुः युद्धानन्तरं विजयः सम्भाव्यते। अस्मिन् योगे यः शुक्रे अष्टमभावे स्थिते शत्रुः शीघ्रमेव वशी भवेत्। एवं प्रकारेण अन्ययोगोऽपि प्रश्नवैष्णवग्रन्थे प्राप्यते -

**मन्दारयोः तनुगयोः तनये सुरेज्ये लाभेऽथ खेज्ञे तपने नभःस्थे।**
**प्रष्टुर्जयं खलु भवेत्समरे प्रकर्षादस्मिन्स्थिते निधनगे वशमेति शत्रुः॥**[173]

---

[171](दैवज्ञवल्लभा.१५.२८)

[172](प्रश्नशिरोमणिः.२.दिग्विजयप्रश्नः.२)

यदि शनैः अथवा कुजस्य लग्ने स्थितिः बृहस्पतिः पञ्चमस्थः एवं बुधः दशमे वा लाभस्थाने सूर्यः दशमस्थश्चेद्तदा प्रष्टा युद्धे विजयं प्राप्स्यति। तथैव सूर्यस्य अष्टमस्थान्वोशत्रुरपि वशीकृतः भवेत्।

प्रश्नशिरोमणिग्रन्थानुसारेण – चन्द्रः दशमे,गुरुः लग्ने तथा सूर्यः षष्ठे तर्हि जयप्राप्तिः सम्भाव्यते। देवतानां, शत्रुणां गुरुः, शुक्रः, चन्द्रः, अथवा सूर्यः एतदवेकः अष्टमभावे स्थितः तदा जयप्राप्तिः उपलक्ष्यते। यदि सूर्यः एकादशे, कुजः दशमे, शनिः तृतीये, चन्द्रः षष्ठस्थाने शेषग्रहाः लग्ने भवन्ति प्रष्टुः जयः तथा द्रव्यलाभो सञ्जायते। अस्मिन् विषये आचार्यबादरायणस्य कथनं यत् एकादशस्थ सूर्य एवालम् विजयप्राप्त्यर्थमिति।

**उदयादेकादशगे भृगुबुधगुरुभास्करेषु चैकतरः।**
**नगराधिपस्य विजयं करोति दशमे तथा भ्रंशम्॥**[174]

अर्थात् प्रश्नलग्नात् एकादशस्थाने शुक्रगुरुबुधसूर्येभ्यः कोऽपि एकः स्यात् तदा राज्ञः विजयः भवति। यस्योपरि आक्रमणं जातम् अथवा कस्मिन्नपि विवादे प्रतिवादी अर्थात् आत्मरक्षणार्थं प्रतिरोधं कुर्वतां पक्षे एव विजयः भविष्यति। यदि पूर्वोक्त ग्रहः दशमे स्यात् तर्हि आक्रमणकारीणां विजयः, आक्रान्तानां पराजयः सम्भाव्यते।

---

[173](प्रश्नवैष्णवः.४.३)

[174](प्रश्नविद्या.६३)

एष नियमः सामान्ययुद्धाय सम्भवति। अतः पण्डितरुद्रमणिः अनेन योगेन सह अन्यग्रहाणामपि समानस्थानं संसूच्य राज्ञः दिग्विजयाय बलं वर्धयति। तद्यथा –कुजसूर्यौ तथैव बलयुक्तराहुः एकादशे भवन्ति तदा शुक्रबुधौ लग्ने चेत् प्रष्टुः जयः, सुखलाभः, राज्यलक्ष्मी च प्राप्यते। शुक्रः सप्तमस्थाने , चन्द्रः अष्टमे, चतुर्थाधिपतिः केन्द्रे (१,४,७,१०) तर्हि जयः तथा ऋद्धिसिद्धिलाभो भवेत्। यदि लग्ने बृहस्पतिः बुधः शुक्रश्च तथैव तृतीये चन्द्रसूर्यौ स्थितौ तर्हि पूर्णविजयः भाव्येते। यदि लग्ने बृहस्पतिः, दशमे सूर्यः, सप्तमे चन्द्रः, चतुर्थे बुधश्चेत् तर्हि अर्थलाभः जयलाभश्च सिध्यति।

चन्द्रात् केन्द्रे (१,४,७,१०) बृहस्पतौ स्थिते "गजकेसरीयोगः" सम्पद्यते।[175] अत्र सप्तमे चन्द्रः तथा चन्द्रस्य केन्द्रे बृहस्पतै स्थिते सति "गजकेसरी" योगः उत्पद्यते। अनेन योगेन सिंहः स्वस्मात् अधिकबलवन्तं जन्तुमपि हन्तुं समर्थो भवति। तथैव राजा शतृणामुपरि युद्धं कृत्वा जयं प्राप्स्यतीति नास्ति सन्देहः। पापग्रहः एकादशे, दशमे बृहस्पतिः, शुक्रे लग्ने स्थिते सति युद्धे विजयमेव। उच्चस्थानगतराहुः लग्ने, शनिकुजौ अतिशत्रुगृहे, उच्चसूर्यः एकादशे, बुधचन्द्रौ शुक्रदशायां स्थितौ चेत् राज्ञः विजयः एव।

---

[175]केन्द्रस्थिते देवगुरौ मृगाङ्काद्योगस्तदाहुर्गजकेसरीति।
दृष्टे सितार्येन्दुसुतैः शशाङ्के नीयास्तहीनैर्गजकसरी स्यात्॥
(जातकपारिजातम्.७.११६)

**चक्रम्-३.२**

| बुधः शुक्रः चन्द्रः | सूर्यः | | राहुः |
|---|---|---|---|
| | दिग्विजययोगः | | |
| | | | शनिः |
| केतुः | | | कुजः |

सूर्यस्य उच्चस्थानं मेषश्चेत् लग्नं मिथुनं, तस्मिन् राहुस्तथैव दशमस्थाने बुधशुक्रचन्द्राः तथैव कुजानां शत्रुः बुधः यदि मिथुनराशौ तर्हि बुधः नातिशत्रुः भवेत्। परन्तु सममेव। अतः कुजः यदि कन्याराशौ स्थितं तर्हि अतिशत्रुस्थाने भवेत्। शनेः सूर्यचन्द्रौ शत्रावेव। अतः सिंहराशि शनिग्रहस्य अतिशत्रुस्थानत्वं भजत्येव।

यदि बृहस्पतिशुक्रौ लग्ने चरराशिगतौ (मेषः-कर्कः-तुला-मकरः) षष्ठभावे बलवान् कुजः व्ययभावे बुधशुक्रौ भवतः तर्हि विजयः तथैव द्रव्यलाभो जायते। लग्ने बृहस्पतिः, सप्तमे चन्द्रः अथवा बुधशुक्रौ दशमे वा चतुर्थे स्थितौ तथा तृतीये, षष्ठे, एकादशे पापग्रहाश्चेदपि पूर्णविजयः सम्प्राप्यते। चन्द्रः दशमे, शुक्रबुधौ चतुर्थे, पञ्चमे अथवा दशमे, चतुर्थे चेत्तथा पापग्रहः तृतीये, षष्ठे, एकादशे भवति तर्हि विजयः भवेत्। आचार्य भट्टोत्पलस्य मतानुसारेण कुजसूर्यशनिग्रहाः (पापग्रहाः) यदि तृतीये, षष्ठे, एकादशस्थाने वा

स्थितःतर्हि कार्यसिद्धिः सम्भाव्यते।[176] एतेषामाधारेणैव पण्डितरुद्रमणिः पूर्वोक्तयोगद्वयं न्यरूपयत्।

प्रश्नशिरोमणिग्रन्थानुसारेण – चन्द्रः दशमे, शुक्रबुधौ चतुर्थपञ्चमे, सूर्य षष्ठे, बृहस्पतिः लग्ने, कुजशनिग्रहौ षष्ठे, एकादशे च तिष्ठन्ति तर्हि प्रष्टुः जयः सम्भाव्यते। यदि शनिराहुग्रहौ लग्ने, सूर्यकुजौ दशमे, बुधशुक्रौ चतुर्थे च तिष्ठन्ति तर्हि विजयः, धनं, राज्यप्राप्तिश्च भविष्यति। लग्ने शुक्रः, चतुर्थे बुधः, सप्तमे बृहस्पतिः, एकादशे कुजः, तृतीये शनिश्चेत् जय–वाहन–राज्यलाभो भवेत्। लग्नेशचन्द्रौ शुभग्रहेण सह इत्थसालं कुरुतः चेत् गम्यमानस्य धनं, सुखञ्च वर्धते। विपरीतञ्चेत् शत्रुकुलात् भयं सम्भाव्यते।

**अशुभग्रहस्थलग्ने बलिभिस्त्वशुभैश्च वीक्षिते युक्ते।**
**युद्धं महदादेश्यं क्षुद्रं सौम्यग्रहर्रहृष्टे॥**[177]

लग्ने अशुभग्रहस्य राशौ बलवान् अशुभग्रहैः दृष्टयुक्तश्चेत् भयङ्करयुद्धं सम्भाव्यते। यदि शुभग्रहाणां दृष्टिः तर्हि स्वल्पविवादो जायते।

अस्य विध्याधारेण पण्डितरुद्रमणिः कथयति यत्  - यदि शनिकुजौ अष्टमे तथा सूर्यः लग्ने तर्हि युद्धे मृत्युः सम्भवेत्। अस्मिन् योगे द्वादशे, अष्टमे चन्द्र तथा सूर्यश्चेत् युद्धे मृत्युः जायते।

---

[176]त्रिषष्ठलाभोपगतैः क्षितिसुतरविसूर्यजैस्तद्वत्॥ (आर्य्यासप्ततिः.१२)

[177](दैवज्ञवल्लभा.७.७)

चन्द्रबुधकुजाः सप्तमे स्थिताश्चेत् गम्यमानराजानं छाया इव मृत्युनुसरति।[178]

अधिकारहीनः कुजः द्वितीये स्थितःरक्षकसेनायाः कष्टमापद्यते। द्वितीये अधिकारहीनो शनौ स्थिते विवादः तथा पवनात् सूर्यश्चेत् चोर-जल-अग्निभ्य युद्धात् च भयमपि भवेत्। द्वितीये अधिकारयुक्तः कुजे स्थिते मनुष्याणां मृत्युभयं तथैव धनेशः नीचे वा अस्तङ्गतश्चेत् राज्ञः यात्रा निष्फला भङ्गा च भवेत्।

प्रश्नशिरोमणिग्रन्थानुसारेण-कुज-चन्द्र-शनि-लग्नाः पञ्चमभावे स्थितास्तर्हि प्रष्टुः भङ्गो भवेत्। लग्ने शनि तथैव चन्द्रः कुजग्रहेण दृष्टश्चेत् मृत्युः भवेत्। कुजशुक्रौ लग्ने स्थितौ चेत् शत्रुणां वृद्धिः तथैव क्षुद्भयं भयमपि जायते। यदि लग्ने बृहस्पतिचन्द्रौ शनैश्चरेण दृष्टौ तर्हि युद्धे प्रभङ्गो भवेत्। यदि पापग्रहः पञ्चमे लग्ने स्थितस्तर्हि युद्धे प्रष्टुः पुत्रस्य मरणं ध्रुवम्। सूर्यचन्द्रौ सप्तमे, अष्टमे, लग्ने वा तर्हि शत्रुभयात् त्रासः, वधो अथवा बन्धनञ्च जायेत।

यदि पापग्रहः द्वितीये, तृतीये अथवा केन्द्रे स्थितः तथा शुभग्रहः वीर्यहीनस्तर्हि चन्द्रः अष्टमे स्थितः गम्यमानपुरुषस्य वधो वा बन्धनस्य भयं वा भवेत्। शुभग्रहः बलवान् भूत्वा केन्द्रे अथवा त्रिकोणे स्थितश्चेत् अनिष्ठत्वादपि समवत्फलं भवेत्।

**शीतांशौ मदगे रवौ तनुगते मन्दारयोरष्टमे**
**सौम्ये भ्रातरि मन्त्रिणा सह गृहीत्वा हन्यते भूपतिः।**

---

[178](प्रश्नशिरोमणिः.२.जयपराजयप्रश्नः)

**सौम्याका तनुगौ स्मरे कुजविधू भङ्गः स्वदेशे यदा**
**द्यूने मन्दकुजौ तनौ रविविधू युद्धे प्रभङ्गस्तदा॥**[179]

चन्द्रः सप्तमे, सूर्यः लग्ने, शुनिकुजौ अष्टमे, शुभग्रहः तृतीये तर्हि राजा मन्त्रिसमेतः म्रियते। शुभग्रहः तथैव सूर्यः लग्ने, कुजचन्द्रौ सप्तमे तर्हि स्वदेशे भङ्गो जायते। यदि सप्तमस्थाने शनि तथा कुजलग्ने सूर्यचन्द्रौ स्थितौ चेदपि युद्धे भङ्गो जायते। सूर्यशनिकुजाः ५, ११, ७, ९ स्थाने स्थिताः चन्द्रः लग्ने चेत् प्रष्टा मन्त्रिसमेतः शत्रुन् हन्ति। यदि बुधशुक्रौ षष्ठस्थाने, सूर्यः अष्टमे, कुजचन्द्रौ लग्ने, सूर्यशनिग्रहौ मन्त्रिसहितशत्रुराशौ कुजदृष्टिश्चेत्तथा शुभग्रहः बलवान् तर्हि सेनापतेः नाशः भवेत्।

**शत्रोरागमने श्रुते स आयाति नवेति प्रश्ने विचारः -**

दूतैः तथा गुप्तचरैः श्रुतं यत् शत्रुः आक्रमणार्थमागच्छति इति तर्ह्यस्मिन् सन्दर्भे सः कदा आगमिष्यति? अस्यप्रश्नस्य विचारः रावणसंहितायां एवमुक्तो वर्तते -

**स्थिरराशिस्थे चन्द्रे चरलग्ने तं नवांशके शीघ्रम्।**
**आयाति रिपुस्सबलो विपर्ययेऽतोऽन्यथा वाच्यम्॥**[180]

यदि स्थिरराशौ चन्द्रस्तथा चरराशौ लग्नं तथा तस्य नवांशोऽपि भवेत्तर्हि शत्रु सेनासहितः आक्रमणं कुर्यात्। यद्यस्मात् विपरीतयोगः शत्रोराक्रमणं न भवेत्। विचारोऽयं आर्यासप्ततिग्रन्थे

[179](प्रश्नशिरोमणिः.२.जयपराजयप्रश्नः २०)
[180](रावण संहिता.६.८.युद्धप्रश्नः-पृ.सं.१११३)

प्रस्फुटो दृश्यते। आचार्य भट्टोत्पलोऽपि मतमिदं स्वीकृतवान् तत् परन्तु पण्डितरुद्रमणेः किञ्चिद्भिन्नं वर्तते यथा –

**इन्दुः स्थिरे चेच्च तनौ चरोदयोऽर्यनागमस्य श्रवणेऽपि चागमः।**
**चरे विधुः स्याच्च तनौ स्थिरोदयो द्विडागमस्य श्रवणेऽपि नागमः॥**[181]

यदि चन्द्रः स्थिरराशिगतश्चेत् तथैव लग्ने चरराशेः उदयः तर्हि शत्रोरागमनं श्रुतंसः शत्रुः आयाति च। यदि चन्द्रः चरराशिगतः तथा लग्ने स्थिरराशिस्तर्हि शत्रोरागमनश्रवणेनापि स नागच्छेत्।

सूर्यशनिशुक्रबुधाः एतेषु यः कोऽपि ग्रहः चरराशिगतश्चेत् शत्रुराजः आक्रमणं कुर्यात्। यदि स एव ग्रहः वक्री तर्हि कदापि आगमनं न सम्भवेत्। स्थिरलग्नः बृहस्पतिशनिभ्यां दृष्टश्चेत् गमनागमनं अर्थात् युद्धाय गमनं शत्रोरागमनं वा नैव सम्भवेत्। अस्मिन् योगे तृतीये, पञ्चमे, षष्ठभावेषु पापग्रहे स्थिते शत्रोः सङ्गमः सम्भाव्यते। तथैव अस्मिन् योगे चतुर्थभावे पापग्रहे स्थिते सति शत्रुराजानां सद्यः निवृत्तिः भवेत् अर्थात् पुनरागच्छतीत्यर्थः। एषः योगः प्रायः सर्वेषु प्रश्नशास्त्रग्रन्थेषु उपलभ्यते एव।

यदि सूर्यचन्द्रौ चतुर्थभावगतौतदा शत्रोरागमनं नैव भवेत्तथा बृहस्पतिः, बुधः शुक्रश्च चतुर्थे, सप्तमभावे वा स्थिताः तर्हि शत्रुः शीघ्रमागच्छेत्। यदि सूर्यचन्द्रौ षष्ठभावे तथा बृहस्पतिः शुक्रश्च चतुर्थभावे तर्हि शत्रुरागच्छेत्। योगममुं प्रायः सर्वे अङ्गीकुर्वन्त्येव परन्तु श्रीनीलकण्ठदैवज्ञस्य मतमिदं वर्तते – शत्रुगृहगतपापग्रहात्

[181](प्रश्नशिरोमणिः.२ शत्रोरागमने श्रुते आगमनं भविश्सति न वेति प्रश्ने विचारः.१)

शत्रुमार्गात् पुनरागच्छेत्। यदि पापग्रहः चतुर्थस्थाने स्थितेतु समीपमागत्याऽपि शत्रुः पराजितस्सन् पलायनं कुर्यात्।[182]

**द्वितनौ हिमकृच्चरं च लग्नं बलयुग्मेन तदैति वैरिभूपः।**
**जयतीह यदा खलेक्षणं स्यात्प्रतिभूपस्य बलात्तिरस्कृतिःस्यात्॥**[183]

यदि चन्द्रः द्विस्वभावराशिगतस्तथा स्थिरलग्ने सति अतिदूरगतश्शत्रुः पुनरायाति। तथैव लग्ने द्विस्वभावराशिगतस्तथा चरराशिस्थ चन्द्रः चेत् शत्रुः मार्गे अर्धभागपर्यन्तम् आगत्य पुनर्निवृत्तो भवेत्। द्विस्वभावराशिगतचन्द्रः तथा लग्ने चरश्चेत् शत्रुः उभयसेनां स्वीकृत्य पुनरागच्छेत्।अस्मिन् विषये आचार्य पृथुयशः एवं कथयति यथा –

**चरे शशी लग्नगतो द्विदेहः पथोऽर्धमागत्य निवर्तते रिपुः।**
**विपर्यये चागमनं द्विधा स्यात् पराजयः स्यादशुभेक्षिते तु॥**[184]

यदि चरराशौ चन्द्रमास्तथा लग्ने द्विस्वभावराशिस्तर्हि शत्रुः अर्धमार्गात् पुनः निवृत्तो भवेत्। अस्मात् विपरीतस्थितिः चेत् शत्रोरागमनं प्रकारद्वयेण निर्णीयते। यदि द्विस्वभावराशौ चन्द्रः, चरराशौ लग्नं चेत्तथा अशुभग्रहः एतौ उभौ पश्यति तर्हि अतितीव्ररूपेण आक्रमणं नैव सम्भवेत् अर्थात् समबलयुद्धं जायते।

---

[182]मार्गान्निवर्तने शत्रुः पापैः शत्रुगृहाश्रितैः।
चतुर्थगैरपि प्राप्तः शत्रुर्भग्नो निवर्तते॥ (ताजीकनीलकण्ठी.प्रश्नतन्त्र.३६-पृ.सं.३९३)

[183](प्रश्नशिरोमणिः.२ शत्रोरागमनप्रश्नः -६)

[184](षट्पञ्चाशिका.२.८)

यदि द्विस्वभावराशिगतचन्द्रस्तथैव चरलग्नं अशुभग्रहः पश्यति चेदथवा तत्र स्थितस्तर्हि निश्चयेन स्थायीराजस्य पराजयमेव। अत्र पण्डितरुद्रमणिना मूलश्लोके “युग्मेन” इति पदस्य प्रयोगः अकारी। तत्र केचन विद्वांसः “द्विधा” शब्दस्य उपयोगम् अकुर्वन्। अस्यार्थः द्विप्रकारक इति। उक्तस्थितौ शत्रोराक्रमणं भागद्वयेन विभज्यते। अथवा तत्राक्रमणं द्विप्रकारम् अर्थात् द्विविधभागैः तावती तीव्रता नैव भवेदपि आशयः समानमिव प्रतीतो भवति। अस्मिन् विषये पण्डितरुद्रमणिः कथयति यथा – यदि लग्नस्थंचन्द्रं पापग्रहः पश्यति तर्हि शत्रुराजस्य सेना स्वराज्यः भूयते। मेष-वृषभ-सिहं-धनुराशिषु कोऽपि एकः राशिगतलग्ने वा चतुर्थे स्थिते तस्मिन्नेव समये शत्रुः पुनरागच्छेत्। अस्मिन् विषये “दैवज्ञजीवनाथ झा महोदयः” अन्यमतंप्रकटयति -

यदि प्रश्नलग्नात् चतुर्थभावे वृश्चिककुम्भमीनकर्कराशिषु कोऽपि एकः राशिगतश्चेत् आक्रान्तानां शत्रुणां पराजयः भवेत्। यदि चतुर्थभावे चतुष्पदराशिषु मेष-वृषभ-सिंहधनूनाम् उत्तरार्धात् कोऽपि एकः राशिगतस्तर्हि शत्रुः भयभीतस्सन् पलायितो भवेत्। यदि सर्वे पापग्रहाः प्रश्नलग्नात् पञ्चमे अथवा षष्ठभावे तर्हि शत्रुसेना पुनरागच्छेत्। यदि पापग्रहः चतुर्थभावे स्थितः तर्हि शत्रोः सेना शीघ्रं पुनरागच्छेत्।[185]

---

[185]सुखालयेऽलिकुम्भमीनकर्कट भवन्ति चेद् रिपोः पराजयस्तदा पलायतं चतुष्पदैः।
सुतारिभावगैः खलैर्निवर्ततेऽरिवाहिनी खलैश्चतुर्थभावगैः समेत्य यात्यरं परः॥
(प्रश्नभूषणम्.६.१)

प्रश्नशिरोमणिग्रन्थानुसारेण – यदि चरलग्ने सूर्ये वा बृहस्पतौ स्थिते सति शत्रुरागच्छेत्। यदि स्थिरलग्ने सूर्यो वा बृहस्पतिः तर्हि शत्रोरागमनं नैव सम्पद्यते। लग्नराशेः चन्द्रस्य राशिः यावत् संख्योपलब्धिःतावत्सु दिनेषु शत्रोरागमनं सम्भाव्यते। परन्तु लग्नचन्द्रस्य राशेः मध्ये कोऽपि ग्रहः न भवेद्यदि कोऽपि ग्रहश्चेत् शत्रुरागच्छेत्। यदि द्वितीयतृतीयभावयोः बृहस्पतिशुक्रौ स्थितौ तर्हि शत्रोरागमनं निश्चयेन भवेत्। यदि पञ्चम, षष्ठभावे च पापग्रहस्तर्हि शत्रुः मार्गात् निवृत्तो भवेत्। तथैव चतुर्थभावे पापग्रहे स्थिते पुरसमीपमागतशत्रुरपि पीडितस्सन् पुनर्निवृत्तो भवेत्। यदि मीनवृश्चिककुम्भकर्कराशयः चतुर्थभावे स्थितास्तर्हि शतृभयं सम्भाव्यते ।

**दुर्गभङ्गप्रश्नः -**

प्रायः कस्यापि राज्ञः राजधानी दुर्गेण संरक्षितो भवेत्। युद्धसमये यायीराजः अनेन दुर्गभङ्गेनैव नगरप्रवेशं कर्तुं समर्थो भवति।अस्मिन् विषये क्रियमाणः प्रश्नः दुर्गभङ्गप्रश्नाः इति कथ्यन्ते। विषयेऽस्मिन् दैवज्ञनीलकण्ठः एवं कथयति –

**प्रश्ने विलग्ने क्रूरे वा दुर्गभङ्गो न जायते।**
**विशेषतो भूमिपत्रे राहौ वा मूर्तिगे सति॥**[186]

प्रश्नकुण्डल्यां पापग्रहः लग्नेस्थितश्चेत् दुर्गभङ्गो भवेत्। कुजराह्वोः लग्नस्थितिद्वारा सविशेषदुर्गभङ्गो जायेत। परन्तु पण्डितरुद्रमणेः अभिप्रायेण सहमतं न आप्यते। ते अस्माद्योगात्

[186](ताजीकनीलकण्ठी.प्रश्नतन्त्र.ताजिके समरसिंह.५०-पृ.सं.३९६)

विपरीतफलं प्रदर्शयन्ति – यदि बलवान् वा निर्बलो पापग्रहः लग्ने स्थितः दुर्गभङ्गो न जायते। यदि अष्टमभावे पापग्रहे स्थिते दुर्गभङ्गो सम्भवेत्तथैव कुजे वा राहौ लग्ने स्थिते भङ्गो नैव भवेत्। यदि राहुः सप्तमे तर्हि शीघ्रमेव भङ्गो भवेत्।[187] पण्डितरुद्रमणिः विषयममुं दैवज्ञपद्मप्रभुसूर्यपेक्षया विशेषरूपेण प्रकटयति यथा –

**पृच्छायां मूर्तिगे क्रूरे दुर्गभङ्गो न जायते।**
**बलहीनेऽपि वक्तव्यं किं पुनर्बलशालिनी॥[188]**

अर्थात् लग्ने पापग्रहः निर्बलश्चेत् दुर्गभङ्गो न जायते। बलवान् चेत् दुर्गभङ्गस्य प्रश्न एव नैव सम्भवेत्। कुजे वा राहौ लग्ने स्थिते इन्द्रोऽपि दुर्गभङ्गं नैव कुर्यात्। सप्तमभावे राहौ स्थिते दुर्गं शीघ्रमेव भात्रिजतं भवेत् यतः लग्ने पापग्रहः शुभं कुर्यात् परन्तु पापग्रहदृष्टिः न शुभकरी एव।

विषयममुं पण्डितरुद्रमणिरप्यङ्गीकरोति। सः कथयति यत् लग्ने शुभग्रहौस्थिते दुर्गभङ्गो भवेत् परन्तु शुभग्रहस्य दृष्टिश्चेत्, दुर्गस्य रक्षा भवत्येव। विवादसङ्ग्रामशत्रुनाशदुर्गभङ्गेत्यादि प्रश्नसमये पापग्रहे लग्ने स्थिते शुभफलं तथैव दृष्टिश्चेत् अशुभफलञ्च भवेत्। एवं प्रकारेण यदि लग्नेशः केन्द्रे (१, ४, ७, १०) स्थितः शुभग्रहेण सह इत्थसालं करोति तर्हि सेनायाः बलभेदनेन दुर्गभङ्गो भवेत् परन्तु

---

[187]खलेऽबले वासबले तनौ नो दुर्गस्य भङ्गोऽष्टमभे हि भङ्ग।
भौमे तनौ वा दितिजे न भङ्गो यदा सुरः सप्तम आशु
भङ्गः॥(प्रश्नशिरोमणिः.२.दुर्गभङ्गप्रश्नः.१)

[188](भुवन दीपक.११७)

पापग्रहः तथा लग्नस्य आभ्यान्तरांशसमानदिनेषु तथा अष्टमासेषु च दुर्गभङ्गो भवेत्।

1) लग्नेशसूर्यौकेन्द्रे तर्हि अग्निदाहः, दुर्गभङ्गो भवेत्।
2) लग्नेशशनेश्चरौ केन्द्रे स्थितौ खण्डनेन दुर्गभङ्गो भवेत्।
3) लग्नेशकुजबुधाः केन्द्रे स्थिताश्चेत् युद्धकारणेन दुर्गभङ्गो भवेत्।
4) लग्नेशशनिकुजयुक्ताः केन्द्रे स्थिताश्चेत् भेदनेन तथा खण्डनेन दुर्गभङ्गो भवेत्।लग्नेशः पापग्रह पीडितश्चेत् केन्द्रे स्थिते बलेन दुर्गभङ्गो भवेत्।
5) लग्नेशः राहुश्च केन्द्रे स्थितौ चेत् पाखण्डने छलेन च दुर्गभङ्गो भवेत्।
6) लग्नेशे केतुयुक्ते केन्द्रे स्थिते दुर्गपतिः दुर्गत्यागो करणीयः। राहुः तथा केतुश्च लग्नेश तथैव तयोः लग्नगतकरणात् पापग्रहे लग्ने स्थिते दुर्गभङ्गो नैव भवेत्। अतः एतेषां दिनानाम् शनेः तथा कुजस्य पापग्रहः (राहुकेतु) पीडितश्चेत् तस्य फलं एवं कथ्यते।
7) शनियुक्तः चन्द्रः लग्नगतश्चेत् जलक्षयात् दुर्गभङ्गो भवेत्।
8) लग्ने शनियुक्तः कुजः पुरुषराशिगतश्चेत् युद्धाग्निना अन्ननाशकारणेन दुर्गस्य लाभो जायते।

ताजिकनीलकण्ठीये कथितं यत् – पापग्रहः लग्नगतश्चेत् तथा लग्नेश द्वादशगतश्चेत् अथवा द्वितीये-षष्ठे-अष्टमभावेषु

स्थितः अपि चेत् दुर्गः पुनः दुष्प्राप्यो भवेत्।[189] परन्तु भुवनदीपिकायाम् अस्य मतस्य विरुद्धं प्रकटयति।

**मूर्ति सप्तमयोः क्रूराभावे लग्नपतिर्व्यये।**
**षष्ठेऽष्टमे द्वितीये वा तदा दुर्गं न भज्यते॥**[190]

अर्थात् लग्ने तथा सप्तमे पापग्रहः न स्थिते चेद्यदि लग्नेशः षष्ठे, अष्टमे, द्वादशे अथवा द्वितीयस्थाने चेत् दुर्गभङ्गो न जायते।

श्रीपद्मप्रभुसूरिमतम् अङ्गीकुर्वन् श्रीपण्डितरुद्रमणिः अस्य योगस्य विषये एवं कथयति - यदि लग्ने सप्तमे पापग्रहः स्थितस्तथा षष्ठे, अष्टमे, द्वितीये लग्नेशः स्थितस्तर्हि दुर्गभङ्गो न भवेत्। यदि द्वादशे द्वितीये पापग्रहे स्थिते "पापकर्तरियोगो" सम्पद्यते। अनेन शत्रुणा आक्रमितदुर्गमपि शत्रुः किमपि कर्तुं न पारयति।[191]

यदि सूर्येण दृष्टः धनेशे स्थिते राज्यं भवेत्। लग्नस्य द्वितीये शुभग्रहे स्थिते अधिकसाहाय्येन गाढपतिः बलवान् भवेत्। सप्तमेशः शुभग्रहदृष्ट्या दृष्टचन्द्रः लग्नेशेन सह इत्थसालं करोति तर्हि यायीराजः स्वदूतं नगरंप्रति प्रेषयति तथैव तस्य वचनानि नगराधिपतिरप्यङ्गीकुर्यात्। यदि लग्नेशस्य मित्रदृष्ट्या दृष्टचन्द्रः सप्तमेशेन सह इत्थसालं करोति चेत् पुरवासी राजा दूतं प्रेषयेत्। तथैव तस्य सन्धिपत्रं यायीराजाऽपि अङ्गीकुर्यात्। यदि चन्द्रशनिग्रहाः

[189](ताजीकनीलकण्ठी.प्रश्नतन्त्र.ताजीके समरसिंह.५१)

[190](भुवन दीपक.१२०)

[191](प्रश्नशिरोमणिः.२.दुर्गभङ्गप्रश्न.३)

कुजेन युक्तास्तर्हि वचनप्रेषणशीलो दूतः वधेन अथवा बन्धनेन वा पीडितो भवेत्।

दुर्गभङ्गप्रश्नस्य समयेष्टे कीटराशिगतः अथवा द्वितीय-एकादश-पञ्चमभावगतबृहस्पतौ स्थिते दुर्गं भयरहितञ्च भवेत्।[192] श्रीनीलकण्ठदैवज्ञेन उक्तं विषयं पण्डितरुद्रमणिः नैवाङ्गीकरोति। सः पञ्चमभावगतस्य बृहस्पतिविषये एवं कथयति -

**खलैश्चतुः कर्मगतैश्च येन प्रवेष्टितं दुर्गमतोऽस्य नाशः।**
**पलायनं वा तनुपुत्रकर्मजीवेऽरिसैन्यं प्रबलं गृहीत्वा॥[193]**

अर्थात् पापग्रहः चतुर्थे, दशमभावे स्थिते यः राजा दुर्गभङ्गं करोति तस्य नाशः भवेत्। लग्नस्य दशमे पञ्चमे बृहस्पतौ स्थिते शत्रोः प्राबलयेन क्षणमात्रे दुर्गं सङ्गृह्य पुनरागच्छेत्।

प्रश्नशिरोमणिग्रन्थे उक्तयोगविषये अन्ये आचार्याः सहमतं प्रकटयन्ति। यथा – पापग्रहः चतुर्थे तथा दशमभावे स्थितः यः सेनादुर्गस्योपरि आक्रमणाय आगच्छति सः म्रियते एव। तथैव दुर्गभङ्गो न भवेत्।

**पापैः सुखव्योमगतैः परैर्यत्प्रवेष्टितो येन नेरश्वरेण।**
**स्वयं च न स्यादचिरेण दुर्गं मुक्तं रिपूर्णं भयविह्वलं स्यात्॥[194]**

प्रश्नशिरोमणिग्रन्थे एवं कथितं यत् – यदि चन्द्रः लग्नेशेन दृष्टस्तथा सौम्यग्रहैः युक्तस्तर्हि अधिकधनवस्त्रलाभो जायते। यदि

---

[192](ताजीकनीलकण्ठी.प्रश्नतन्त्र.ताजीके समरसिंह.५४)

[193](प्रश्नशिरोमणिः.२ दुर्गभङ्गप्रश्नः.४)

[194](प्रश्नचण्डेश्वरः.७.४)

केन्द्रस्थ पापग्रहः लग्नं तथा लग्नपतिना पीडितस्तर्हि पूर्वादिशाया क्रमेण दुर्गाय अवश्यमधिकभयं प्राप्यते। लग्ने पापयुक्तश्चन्द्रो दशमस्थ पापग्रहेण दृष्टस्तर्हि यत्नेन दुर्गभङ्गो जायते। यदि द्वौ वा त्रयः पापग्रहाः चन्द्रेण सह लग्ने वा सप्तमे स्थिते युद्धे राज्ञः नाशो भवेत्। परन्तु यदि शुभग्रहस्य दृष्टिश्चेत् निश्चयेन जयः प्राप्यते। बृहस्पतिः लग्ने स्थित्वा मित्रदृष्ट्या लग्नं पश्यति तथा बलवान् उदयस्य शुभग्रहास्तथा चन्द्रेण सूर्यशुक्रौ दृष्टौ चेत् गाढपतिराज्यस्य प्रहर्षकल्याणप्राप्तिः स्यात्।

पण्डितविष्णुदत्तवैदिकः लग्नगतबृहस्पतेः फलमेवं कथयति यथा – दुर्गभङ्गे प्रभूतप्रष्टुः सुखप्राप्तिः स्यात्। तथा शीघ्रमेव चतुर्भ्यः दिशभ्यः शत्रुदुर्गं चतुर्षु दिक्षु आक्रमति। शत्रुरपि तत्काले एव पराजयं प्राप्स्यति।[195]

अत एव पण्डितरुद्रमणिः लग्नगतबृहस्पतेः सप्त अन्ययोगानपि अनिवार्यरूपेणाङ्गीकरोति। प्रश्नशिरोमणि-ग्रन्थानुसारेण लग्नेशः लग्ने शुक्र वा बृहस्पतिः, शुभग्रहः अथवा मित्रग्रहैः दृष्टश्चेत् दुर्गस्थितपुरुषाणां शुभदायकः एव। विषयरूपेण स्वोदयशुभग्रहात् दृष्टश्चेत् विजयः भवेत्। यदि दशमे, षष्ठे वा लग्ने वृश्चिकसिंहराशीनामुपरि बलवान् लग्नेशः वा शुक्रो वा बृहस्पतिस्तर्हि गढस्थितराजा बहिरागत्य युद्धं कृत्वा विजयं प्राप्नोति। यदि लग्नेशः पूर्णबली तथैव स्थिरसंज्ञककेन्द्रे स्थिते पुरेशः बली तर्हि तदा सप्तमेशे स्थिते यायीराजा बलवान् भवेत्। यदि पापग्रहे केन्द्रे (१, ४, ७, १०) स्थिते आक्रमणं कुर्वाणः राजा बन्धूनां यन्त्रपातेन नष्टो भवेत्।

---

[195] (प्रश्नचण्डेश्वरः.७.५)

अस्मिन् दुर्गभङ्गप्रश्ने श्रीनीलकण्ठदैवज्ञः तथा पण्डितरुद्रमणिः एतौ उभावेव अस्य योगस्य विषये एकमतं प्रदर्शयतः। ताजिकनीलकण्ठीये एवमुक्तमस्ति यथा – प्रश्नसमये पापग्रहः केन्द्रे वा कर्कवृश्चिके स्थितः चेत् दुर्गस्थसेनायाः विनाशः सम्भाव्यते।[196] प्रश्नशिरोमणिग्रन्थानुसारेण – यदि लग्नेशसप्तमेशयोः एकः आपोक्लिमे अथवा अस्तङ्गतश्चेत् अथवा वक्री वा न्यूनबली तर्हि सैव राजा निर्बलो भवेत्। यदि स्वराशिपतिः लग्नम् अथवा लग्नेशं मित्रदृष्ट्या पश्यति तथा दुर्गेशः बलयुक्तो भवेत्तथैव चतुर्थेशं, सप्तमेशं, षष्ठेशं वा मित्रदृष्ट्या पश्यति तर्हि शत्रुः बलयुक्तो भवेत्। लग्ने दशमेशस्य वा सूर्यस्य वा अधिकारः नैव भवेत्तर्हि दुर्गभङ्गो भवेत्। अथवा उक्तयोगे चरलग्नस्य पापग्रहश्चेत् अतियत्नेन दुर्गभङ्गो भवेत्। लग्ने उच्चराशिगतग्रहाणां कम्बूलयोगः अथवा बुधस्य इत्थसालयोगः भवति चेत् दुर्गभङ्गो न सम्भवेत्।

**न दुर्गस्य भङ्गो रवीन्द्वारमन्देत्थसाले द्विदेहोदये दुर्गभङ्गः।**
**चरर्क्षे विशेषप्रयत्नेन भूयाद्यदाङ्गे विधुः पापयुक् कर्मगेन॥**[197]

यदि द्विस्वभावलग्ने सूर्यचन्द्रकुजाः तत्रैव शनिग्रहस्य च इत्थसालं भवति तर्हि दुर्गभङ्गो भवेत्। उक्तयोगः चरराशौ स्थिते चेत् विशेषयत्नेन दुर्गभङ्गो भवेत्। यदि पूर्णबली शुभग्रहः मन्दगति भूत्वा सप्तमचतुर्थभावयोः तर्हि दुर्गभङ्गे नैव भवेत्। किन्तु यायीराजः भग्नं भूत्वा शीघ्रमेन नाशं प्राप्स्यति। लग्ने सूर्याद्भिन्नाः राहुकुजशनिग्रहाः तथा सप्तमभावे शुभग्रहाश्चेत् यत्नेन गढपतेः दुर्गभङ्गो जायते।

---

[196](ताजीकनीलकण्ठी.प्रश्नतन्त्र.ताजीके समरसिंह.५३)

[197](प्रश्नशिरोमणिः.२.दुर्गभङ्गप्रश्नः.११)

चरलग्ने उक्तयोगः भवति चेत् दुर्गपतिः दुर्गं त्यक्त्वा पलायनं कुर्यात्। सूर्यः शनिर्वा कुजग्रहः लग्ने स्थितंतर्हि दुर्गात् यन्त्राणाम् अपिपातो भवेत्।

**वादप्रश्नः -**

**क्रूरः खचरो लग्ने विवादपृच्छासु जयति विवादं तम्।**
**सर्वावस्थासु परं नीचेऽस्ते जयति न द्विषतः॥**[198]

श्रीनीलकण्ठदैवज्ञस्य मतानुसारेण वादविवादे कस्य जयः भवेत्? एतादृशप्रश्ने यदि सर्वे पापग्रहाः लग्नगतास्तर्हि सर्वविवादेषु वादी एव विजयं प्राप्नोति। नीचशत्रुगतलग्नेशात् शत्रोः विजयः नैव भवेत्।

श्रीपद्मप्रभुसूरिमतमिदं नैवाङ्गीकरोति। तस्य मते सर्वेषां पापग्रहाणां लग्नस्थितिः आवश्यकि। किन्तु तस्य मते यदि एषः नीचो वा अस्तङ्गतस्तर्हि कथञ्चिदपि शत्रुः जयति।[199] पण्डितरुद्रमणिरपि मतमिदमङ्गीकरोति। अस्याभिप्राये प्रश्नलग्ने पापग्रहः स्थितस्तथैव प्रश्नकर्ता सप्तमभावगतश्चेत् प्रतिवादी विवादे जयं प्राप्येति। विषयममुं "श्रीदैवज्ञजीवनाथ झा महोदयः" अतिसम्मान्येन एवं कथयति यथा –

---

[198](ताजीकनीलकण्ठी.प्रश्नतन्त्र.समससिंहे.१५३)

[199]क्रूरः रवेटो लग्ने विवाद पृच्छासु जयति विवदन्तम्।
सर्वावस्थासु परं नीचास्ते जयति द्विषितम्॥ (भुवन दीपक.९९)

**वादिनो विजयप्रश्ने लग्ने क्रूरे तदा जयः।**
**यदि स्यात्सप्तमे क्रूरो विजयः प्रतिवादिनः॥**[200]

अर्थात् पापग्रहे प्रश्नलग्ने स्थिते यायीराजस्य अथवा वादिनः पक्षस्य विजयः भवेत्। तथैव यदि प्रश्नलग्नात् सप्तमभावे पापग्रहः स्थितस्तर्हि स्थायीराज्ञः वा प्रतिवादीपक्षस्य जयः भवेत्। प्रश्नशिरोमणिग्रन्थे पण्डितरुद्रमणिः अस्मिन् विषये तथैव अन्ययोगं एवं कथयति –

सप्तमेशलग्नेशयोः चन्द्रेण सह इशराफयोगञ्चेत् दीर्घकालं विवादो जायते। यदि द्वितीयगृहे द्विस्वभावराशौ सप्तमेशलग्नेशौ स्थितौ तर्हि राज्ञः स्थाने सभा भवेत्। सूक्ष्मभोगवान् अर्थात् यस्य अधिकांशाः न्यूनीकृताः तादृश लग्नेशः बलवान् भूत्वा केन्द्रे (१, ४, ७, १०) स्थितश्चेत् पृच्छकः बली भवेत्। एवं प्रकारेण सप्तमेशः स्थितश्चेत् वादी बली भवेत्। यदि लग्नेशसप्तमेशयोः चन्द्रेण सह इत्थसालयोगः भवति तर्हि शीघ्रमेव विवादस्य शान्तिः भवेत्। अथवा लग्नेशसप्तमेशयोः मित्रदृष्ट्या दशमेशवर्गे लग्नेश तथा सप्तमेशः इत्थसालं करोति चेत् युक्तो वा दृष्टश्चेत् राजद्वारा उभयोः शान्तिः जायते। यदि लग्ने तथा सप्तमे पापग्रहः तर्हि यः भावः बली भवेत् सैव अन्तिमे बलवान् तथैव विजयञ्च प्राप्स्यति।[201]

---

[200](प्रश्नभूषणम्.१३.१)

[201]विवादेखलोऽङ्गेजयीप्रश्नकृत्स्यात्स्मरेचेत्तदन्योद्वयोर्यद्बलः स्यात्।
विवादावसानेबलीयान्जयीचेद्विहायोदयास्तेस्थितौक्रूखेटौ॥
(प्रश्नशिरोमणिः.२.वादप्रश्नः.१)

श्रीपद्मप्रभुसूरिः विषयममुमङ्गीकरोति। तस्य मते – एतादृशयोगे विवादं कुर्वातां जनानां मध्ये कलहो न समाप्यते। किन्तु किञ्चित्समयानन्तरं बलवान् ग्रहः निर्बलग्रहं जयेत्।

**लग्ने द्यूने च यदा क्रूरः खटो विवादिनोर्न तदा।**
**कलहनिवृत्तः कालेन जयति बलवान्गतबलं तु॥**[202]

एतावत्पर्यन्तं लग्ने तथा सप्तमे क्रूरग्रहश्चेत् बलवान् तथैव सप्तमभावः बलवान् चेत् वादिनः जयः, लग्ने बलवान् चेत् प्रतिवादिपक्षे जयः स्यादिति कथितम्। परन्तु दैवज्ञः जीवनाथ झा महोदयः एतेषामपेक्षया किञ्चिदग्रे गत्वा एवं कथयति -

**लग्ने च सप्तमे क्रूरावनयोर्बलिनो जयः।**
**यदा द्वौ बलिनौ स्यातां सन्धिर्वा विग्रहो महान्॥**[203]

यदि लग्ने तथा सप्तमे स्थितयोः द्वयोः ग्रहयोः समबलं चेत् उभयपक्षयोः सन्धिः सञ्जायते। अथवा महान् विरोधोऽपि उत्पद्यते। प्रश्नशिरोमणिग्रन्थे अग्रे कथयति यत् – यदि लग्नेशसप्तमेशयोः यः वक्री सैव सभायां निर्बलो भवेत्। यः दशमाधिपतिद्वारा दृष्टश्चेत् सः सभायाम् अन्यायी भवेत्। यः सूर्येण सह इत्थसालं करोति चेत् सः बली भवेत्। यः स्वोच्चराशौ स्थित्वा केन्द्राधिपत्या सह इत्थसालं करोति चेत् तस्य सहायकः राजा भवेत्।

**ससद्यन्यायी स्याद्यश्चार्केणेत्थसालकृत्स बली।**
**यः स्वर्क्षोच्ये केन्द्राधिपमुत्थसिली नृपः सहायः स्यात्॥**[204]

---

[202](भुवन दीपक.१००)

[203](प्रश्नभूषणम्.१३.२)

श्लोकोऽयं अस्य वादप्रश्नस्य प्रमुखश्लोकः भवति। यतः अस्मिन् उक्तविषयाः अन्यप्रधानप्रश्नग्रन्थेषु कुत्रापि नैव लभ्यन्ते। तथा पण्डितरुद्रमणेः वैशिष्ट्यमिदमस्ति यत् प्रत्येकं विषयम् अतिविस्तृतरूपेण विचारयित्वा प्रतिपादयति। विवादप्रश्नेऽपि तैरेवमेवकृतमासीत्। पुनरग्रे एवमपि कथयति - यदि शनिः दशमेशे (वृषभ वा मिथुन लग्ने) स्थितः तथा बलवान् भूत्वा कुजेन दृष्टश्चेत् केन्द्रस्थः न्यायधर्मयुक्तो भवेत्। किन्तु पूर्णदण्डयुक्तो भवेत्।यदि कुजबृहस्पतिशुक्राः दशमभावगतास्तथा धर्मयुक्तपूर्णन्यायं कुर्यात्। तथैव बुधश्चेत् समागमो भवेत्। लग्नेशः तथा सप्तमेशः चन्द्रेण सह इशराफयोगं कुरुतः चेत् विवादः चिरकालं तिष्ठति। यदि लग्नः दशमस्थाने अशुभग्रहयुक्तश्चेत् पुनः राज्ञः द्वितीयसभा स्यात्। यदि लग्नसप्तमौ त्यक्त्वा अन्यस्थाने स्थितौ द्वौ पापग्रहौ परस्परं शत्रुदृष्टिसहितौ तर्हि वादी अचिरादेव खड्गप्रहारं कुर्यात्। परन्तु “दैवज्ञजीवनाथ झा महोदयस्य” मतं किञ्चिद्भिन्नमस्ति –

**अथवा यत्र-कुत्रस्थौ पापौ पूर्णदृशा मिथः।**
**पश्यतोऽस्त्रप्रहारेण वादिनोर्मरणं भवेत्॥**[205]

अर्थात् यस्मिन् कस्मिन्नपि भावे स्थितौ द्वौ पापग्रहौ एकः अन्यस्मात् क्रूरदृष्टिया दृष्टश्चेत् अस्त्रघातेन वादिंप्रतिवादीनो मृत्युः सम्भवेत्।

---

[204](प्रश्नशिरोमणिः.२.वादप्रश्नः.६)

[205](प्रश्नभूषणम्.१३.३)

**रोगप्रश्नः -**

**रोगार्तानामिह तु बहुधा कल्प्यते रोगहोतु-**
**र्भूतावेशाद् ग्रहगतिवशाद् वातपित्तादिकोपात्।**
**एतत्तथ्यं त्रिविधमुदितं प्रायशः स्वीयपाप्माः**
**रोगोत्पत्तेर्भवति हि नृणां हेतुरेकस्त्रिधा स्यात्॥**[206]

रोगिणां रोगप्राप्तेः कारणानि अनेकानि भवन्ति। यथा भूताद्यावेशः, ग्रहगतिः, वातपित्तप्रकोपः इत्यादयः भवन्ति। परन्तु एतत्त्रयस्य कारणं तु वास्तवे पूर्वजन्मकृतपापकर्माणां फलस्य विपाक एव। पापंरूपत्रयेण फलदातृ भविष्यति। यथा –

**दृढादृढक्रियाप्तत्वाच्छुभाशुभफलं द्विधा।**
**मनोवाक्कर्मजं तच्च त्रिविधं तद्विदोच्यते॥**[207]

शुभाशुभफलं दृढमेवम् अदृढकर्मजन्यकारणेन द्विप्रकारकं भवति। तथैव तेऽपि वङ्मनःक्रियेति उत्पादकभेदेन पुनः त्रिप्रकारकमिति कथ्यन्ते यथा –

[206](प्रश्नमार्गः.१३-३०)

[207](रावण संहिता.६.३-पृ.सं.९०७)




**रोगास्तु द्विविधा – ज्ञेया निजागन्तु विभेदतः।**
**निजाञ्चागन्तु काश्चपि प्रत्येकं द्विविधाः पुनः॥**[208]

वंशगतेन तथा आगन्तुकभेदेन रोगः द्विप्रकारको भवति। तथैव सहजागन्तुकरोगाभ्यां प्रत्येकं प्रकारद्वयं सम्पद्यते। यथा –

[208](रावण संहिता.६-३)




एवं प्रकारेण मनुष्याणां पूर्वकृतपापा एव रोगकारणानि भवन्ति। एवं प्रकारेण मनुष्येण प्राप्तरोगपीडासम्बद्धः प्रश्नएव रोगप्रश्नेति कथ्यते। एवं प्रकारकप्रश्ने लग्ने वैद्यः, दशमे रोगी, चतुर्थे औषधीः, षष्ठे रोगः वक्तव्यः इति पण्डितरुद्रमणिः कथयति। श्रीनीलकण्ठदैवज्ञेऽपि एतान् विषयान् अङ्गीकरोति परन्तु षष्ठभावस्थाने सप्तमभावं रोगस्यति मन्यन्ते। परन्तु दैवज्ञजीवनाथ झा महोदयः चतुर्थभावं रोगीति, दशमभावम् औषधमिति, सप्तमं रोगस्येति मन्यन्ते। स्पष्टज्ञानार्थं रोगादिबोधकभावकोष्ठकमधः प्रदीयते –

**सारिणी– ३.३**

**रोगादिबोधकभावचक्रम्**

| भावः | प्रश्नशिरोमणिः 209 | ताजिकनीकण्ठीयम् 210 | प्रश्नभूषणम् 211 |
|---|---|---|---|
| **लग्नः** | वैद्यः | वैद्यः | वैद्यः |
| **चतुर्थः** | औषधम् | औषधम् | रोगी |
| **षष्ठः** | रोगः | * | * |
| **सप्तमः** | * | रोगः | रोगः |
| **दशमः** | रोगी | रोगी | औषधम् |

प्रश्नशिरोमणिग्रन्थानुसारेण – यः भावः शुद्धो वा शुभग्रहयुक्त सः शुभं वदेत्। यदि पापग्रहयुक्तश्चन्द्रे चतुर्थे, अष्टमे, द्वादशभावे स्थिते तथैव पापग्रहे द्वितीये, सप्तमे, द्वादशभावे स्थिते रोगीणां मृत्युः भवेत्। परन्तु पण्डितरुद्रमणेः मतेनानेन श्रीपद्मप्रभुसूरिः सहमतं नैव प्रदर्शयति। तस्य अभिप्रायः एवमस्ति यथा -

**स्मरे व्यये धने क्रूरे लग्नमृत्यौ रिपौ राशि।**
**सद्यो मृत्युकरो योगः क्रूरे वा चन्द्रपार्श्वगे॥**[212]

---

209(प्रश्नशिरोमणिः.२.रोगप्रश्नः.१)

210(ताजीकनीलकण्ठी.प्रश्नतन्त्र)

211(प्रश्नभूषणम्.११.८)

212(भुवन दीपक.११७)

अर्थात् सप्तमे, द्वितीये तथैव द्वादशस्थाने पापग्रहस्तथा लग्ने, अष्टमे, षष्ठे वा चन्द्रश्चेत् एष योगः शीघ्रमृत्युदायक एव। पण्डितरुद्रमणिः कथयति यत् – पापग्रहयुक्तश्चन्द्रे चतुर्थे-अष्टमे-द्वादशे स्थिते सति फलमिदं भवति। परन्तु श्रीपद्मप्रभुसूरिः अष्टमे वा षष्ठे फलमेतत् कथयति। अन्यत् सर्वं एकविधमेव स्यात्।

प्रश्नशिरोमणिग्रन्थानुसारेण – यद्यस्मिन् योगे सूर्यः लग्ने, बुधः सप्तमे स्थितःतर्हि शीघ्रमेव रोगीणां मृत्युः जायते। तथैव यदि रोगरहितश्चेत् कष्टं भवेत्। लग्ने पापग्रहेस्थिते वैद्यः निपुणो भवेत्।तथैव तस्य वैद्येन रोगो वर्धते। यदि तत्र शुभग्रहस्तर्हि सुखेन भवति। यदि चतुर्थभावे पापग्रहे स्थिते वैद्यस्य औषधेन दीर्घरोगो जायते। यदि शुभग्रहस्तर्हि सद्वैद्येन दीयमानौषधेभ्यः सुखी भवेत्।

यदि सप्तमभावे पापग्रहे स्थिते सति औषधं वैद्यात् वा अन्यरोगः उत्पद्यते। यदि पापग्रहे स्थिते सुखी भवेत्। यदि दशमभावे पापग्रहः तर्हि स्वबुद्ध्या कुपथ्यकरणेन रोगः संवर्धते। यदि शुभग्रहः भवति तर्हि सुखी एव। यदि चन्द्रः शुभग्रहेण युक्तो वा दृष्टः केन्द्रस्थ (१, ४, ७, १०) चेत् तथैव लग्नेशेन सह इत्थसालं करोति तर्हि रोगजालं हरत्येव। पण्डितरुद्रमणिः अत्र चन्द्रः केन्द्रस्थाने लग्नेशेन सह इत्थसालयोगस्य फलं प्रददातीति कथयति। परन्तु श्रीमन्नारायणदासस्य मतानुसारेण लग्न वा चन्द्रः केन्द्रे स्थित्वा शुभग्रहेण सह इत्थसालं कथयति। अन्यत् सर्वम् एकधा एव यथा-

**सौम्यग्रहेणाथ विलग्नपेन यदीत्थशालङ्कुरुते शशाङ्कः।**
**केन्द्रस्थितः सौम्ययुतेक्षितः स्यात् निहन्ति रोगं सुखमाशु कुर्यात्॥**[213]

---

[213](प्रश्नवैष्णवः.९.१०)

प्रश्नशिरोमणिग्रन्थे अग्रे एवं कथयति यत् यदि केन्द्रस्थ लग्नेशः तथा चन्द्रः केवलं शुभग्रहैः दृष्टो वा युक्तस्तथा वक्री सप्तमेशः अष्टमेशेन सूर्येण रहितः चेत् शीघ्रमेव रोगाणां नाशं कुर्यात्।

**प्रश्नश्चेत्स्थिरलग्ने तदा न मरणं न रोगशान्तिर्वा।**
**चरलग्ने विपरीतं द्विदेहलग्ने तु पूर्वामिव॥**[214]

अर्थात् प्रश्नलग्ने यदि स्थिरराशिः मृत्युः नैव। तथैव रोगोऽपि सम्यक् नैव भवेत्। चरलग्ने अस्माद्विपरीतफलं कथ्यते। द्विस्वभावलग्ने स्थिरराशि इव फलम्। आचार्यवराहमिहिरस्य एतं विधिम् अङ्गीकृत्य पण्डितरुद्रमणिः एवं कथयति यत् -

यदि चरे वा द्विस्वभावलग्ने चन्द्रस्तथा लग्नेशः शुभग्रहेण दृष्टस्तर्हि स्वराशिगत (कर्क) चन्द्रे दशमे वा चतुर्थभावे स्थिते रोगनाशो भवेत् ।यदि चन्द्रः लग्नेशेन सह इत्थसालं शुभग्रहे शुभदृष्ट्या दृष्टस्तर्हि सुखं किञ्च तथा रोगहानिश्च जायते। प्रश्नशिरोमणिग्रन्थे – यदि स्वराशिस्थ चन्द्रः शुभग्रहेण सह इत्थसालं करोति तर्हि रोगनाशो करोति।यदि चन्द्रस्य गृहे (कर्क) कोऽपि वक्रग्रहः स्थितः तर्हि स्वास्त्थ्यं प्राप्याऽपि रोगोत्पनतिः भवेत्।[215]

यदि चन्द्रलग्नेशौ अष्टमभावगतौतर्हि मृत्युः भवेत्। यदि लग्नेशअष्टमेशौ इत्थसालयोगे अथवा चन्द्रलग्नेशौ पापग्रहदृष्टियुक्तौ अष्टमे, एकादशे वा भावे स्थितौ अथवा लग्नाधिपतिः एकाकी एव अष्टमे स्थितः तर्हि रुग्णस्य मृत्युः भवेत्। श्रीनीलकण्ठदैवज्ञोऽपि मतममुमङ्गीकरोत्येव। एतैः योगैस्सह

---

[214](दैवज्ञवल्लभा.८.८)

[215](प्रश्नशिरोमणिः.२.रोगप्रश्नः.७)

अन्येऽपि योगं कथ्यते यत् – लग्नेशः यदि चन्द्रेण सह इत्थसालयोगे स्थितः चेदपि रोगी रोगान्मुक्तो भविष्यति।[216]

प्रश्नशिरोमणिग्रन्थानुसारेण – यदि चतुर्थभावे नीचस्थानगतलग्नेशः षष्ठगत चन्द्रः सप्तमेशेन सह इत्थसालं करोतः तर्हि सप्तमेशः षष्ठभावगतश्चेत् मृत्युः सम्भवेत्। यदि लग्नेशचन्द्रौ केन्द्रे (१, ४, ७, १०) वा अष्टमे स्थित्वा पापग्रहेण इत्थसालं कुर्वतः अथवा अस्तङ्गतौ तथैव पापग्रहदृष्टिस्तर्हि रोगिणां मृत्युः भवेत्। यदि लग्नस्थः चन्द्रः, शनिश्च द्वादशे, सूर्यः अष्टमे तथा कुजः दशमे तर्हि रुग्णः मृत्युं प्राप्नोति। यदि बलवान् शुभग्रहः चेत् जीवितो भवेत्। यदि न भवति तर्हि नैव जीवेत्। यदि सर्वे पापग्रहाः लग्ने, चतुर्थे, पञ्चमे, अष्टमे, द्वादशभावेषु स्थिताश्चेत् आयुषः नाश एव। यदि सर्वे पापग्रहाः केन्द्रे स्थिताः तथैव पृष्ठोदयराशौ (मेषः-वृषभः-कर्कः-धनुः-मकरः) अष्टमस्थ चन्द्रश्चेत् मृत्युरेव। एतादृश एव दैवज्ञवल्लभायामपि एकः योगः लभ्यते यथा - लग्ने पृष्ठोदयराशिः, केन्द्रे पापग्रहः एवम् अष्टमस्थाने चन्द्रश्चेत् सः रोगी मृत्युं प्राप्नोति। अथवा बलवातीपापग्रहाणां लग्ने एवं चन्द्रस्योपरि दृष्टिः चेत् रोगी म्रियते।[217]

प्रश्नशिरोमणिग्रन्थानुसारेण – यदि अष्टमलग्नं तथैव सप्तमभावञ्च पापग्रहश्चेत्तथैव शुभग्रहः निर्बलश्चेत् रोगिणां मरणमेव। यदि चन्द्रः चतुर्थे वा अष्टमे स्थित्वा द्वयोः पापग्रहयोः

---

[216](ता.नी.प्रश्नतन्त्र.भावप्रश्ननिरूपणं.४७)

[217]पृष्ठोदये विलग्ने क्रूराः केन्द्रेऽष्टगः राशी यस्य।
रोगार्तस्य विनाशो दृष्टे वा बलयुतैः पापैः॥ (दै.व.८.२)

अन्तरान्तः तर्हि मृत्युरेव। योगममुमन्ये आचार्याः अपि अङ्गीकुर्वन्ति। यदि जन्मराशिस्थशनिः पापग्रहेण विषमदृष्ट्या दृष्टस्तर्हि मृत्युरेव। अष्टमभावे यस्य जन्मराशिः पापग्रहैः दृष्टं तस्य मृत्युर्भवति। योगममुं आचार्यबादरायणः अतिविस्तृतरूपेण एवं विवरणं ददाति यथा -

**रोगार्ते जन्मर्क्षं पश्येत् पापो न तस्य शिवमस्ति।**
**लग्नान्निधनगतः पृच्छाकाले शुभं हन्यात्॥**[218]

अर्थात् यदि कस्यापि रोगिणः शुभाशुभविषये प्रश्नः क्रियते तदा तस्याः व्यक्तेः जन्मराशिं प्रश्नलग्ने कोऽपि पापग्रहः पश्यति तर्हि रूग्णः शुभकरः नैव भवेत्। यदि लग्नात् अष्टमस्थाने स एव तर्हि परमाशुभं जायते। एवमेव फलम् वक्तव्यम्। प्रश्नशिरोमणि-ग्रन्थानुसारेण – यदि शनि वा कुजस्यराशेः (मकर-कुम्भ-मेष-वृश्चिक) चन्द्रस्तथा लग्ने पापग्रहः, अष्टमे शनिस्तथा कुजः, सप्तमे शुक्रः स्थितस्तथा शुभग्रहः निर्बलः तर्हि मृत्युः भवेत्। यदि केन्द्रे (१, ४, ७, १०) त्रिकोणे (५, ९) शुभग्रहश्चेत् शुभलग्नं शुभग्रहः पश्यति तर्हि, पूर्णचन्द्रः केन्द्रे, षष्ठे, एकादशभावे स्थितः तदा रोगी सुखी भवेत्। यदि लग्ने बुधः पूर्णचन्द्रश्च, केन्द्रे शुक्रबृहस्पतीः, पापग्रहाः षष्ठस्थाने वा एकादशे स्थिते रोगी सुखी भवेत्।

**बन्धमोक्षप्रश्नः -**

**मृत्युर्धरणकं नौश्च फलेन सदृशं त्रयम्।**
**म्रियते येन योगेन तेन योगेन मुच्यते॥**[219]

---

[218](प्र.वि.३०)

मृत्यु-बन्धन-नावानां प्रश्नविचारः समानमेव। येन योगेन मृत्युर्भवेत्। तेनैव मुक्तिः लभ्यते। मृत्युयोगे सम्प्राप्ते सति नौः सकुशलमागच्छेत् तदा रोगी म्रियते। तथैव बन्धिना शीघ्रमेव विमुक्तिः प्राप्यते। विषयममुमन्ये आचार्याः अङ्गीकुर्वन्त्येव यथा-

**बद्धोऽस्ति तत्किं भवितेति प्रश्ने विमुच्यतेऽसौ खलु मृत्युयोगे।**
**कदा विमुच्येदिति पृच्छमाने शुभं कदा भावि च तैर्मृतिःस्यात्॥**[220]

बन्धने बध्यमानव्यक्तेः भविष्यकालः कथं भवेत्? यदि एतादृशप्रश्ने मृत्युयोगप्राप्तिः जातकशास्त्रोक्त मृत्युयोगप्राप्तिसदृशः अस्ति तर्हि सैव बन्धनं गतप्राणिनः बन्धनात् मुक्तिं कारयति। अर्थात् बन्धनमुक्तिः कदा भवेत्? प्रश्नलग्ने प्राप्तमृत्युयोगात् बन्धनगतमानवस्य मृत्युः भवेत्। यथा मुक्तिप्रश्ने केन्द्रस्थ केन्द्रेशात् त्याज्यो नैव भवेत्।

विषयममुं पण्डितरुद्रमणिरपि अङ्गीकरोति। तेषाम्मतानुसारेण केन्द्रे (१, ४, ७, १०) केन्द्राधिनाथेन सह लग्नेशस्य इत्थसालं भवति चेत् बन्धनान्मुक्तिः नैव। लग्नाधिपतिः लग्ने, पापग्रहे केन्द्रे स्थिते दीर्घकालानन्तरं बन्धनान्मुक्तिः भवेत्। यदि केन्द्रे शुभग्रहाणां इत्थसालं तथैव कम्बूलयोगश्चेत् बन्धनात् बहुकालानन्तरं विमुक्तिः स्यात्। यदि आपोक्लिमस्थाने (३, ६, १२) लग्नेशं पापद्वादशेशः पश्यति चेत् दीर्घकालपर्यन्तं बन्धनं भवेत्। यदि लग्नेशचन्द्रौ शुभग्रहयुक्तौ शुभफलं लभ्येत। यदि केन्द्रस्थ

---

[219](भुवन दीपक.१३८)

[220](ताजीकनीलकण्ठी.प्रश्नतन्त्र – ताजिकसमसिंहः -१६१)

लग्नेशेन सह चन्द्रस्य इत्थसालं भवेत्तर्हि मोक्षेच्छा स्यादपि नैव मुक्तिः भवेत्। यदि केन्द्रस्थ लग्नेशः १२, ९, ६ स्थाने स्थित्वा ग्रहेण सह इत्थसालं करोति तर्हि सुखपूर्वकं बन्धनान्मुक्तिः भवेत्। अथवा चन्द्रस्तथा लग्नेशस्य इत्थसालं भवति तर्हि कष्टपूर्वकं बन्धान्मुक्तिः सम्भवेत्।अष्टमेशपापग्रहयोः तथा लग्नेशस्य चतुर्थस्थाने इत्थसालं भवति चेत् बन्धनान्मृत्युः तथैव चतुर्थभावे पापग्रहस्तथा चन्द्रेण इत्थसालं तर्हयादि मृत्युः एव।

परन्तु अस्मात् योगात् दैवज्ञनीलकण्ठः सहमतिं न प्रदर्शयति। तस्य फलं किञ्चिद्भिन्नमेव – चतुर्थचन्द्रस्तथा पापग्रहः अष्टमेशेन सह इत्थसालं करोति चेत् कारागारे मृत्युः भवेत्। शनियुक्तस्तथा दृष्टः केन्द्रगतचन्द्रात् बन्धनस्थाय दीर्घकालिकशरीरपीडा भवेत्।[221] योगममुं पण्डितरुद्रमणिः नैवाङ्गीकरोति तस्याभिप्रायेण – यदि शनियुक्तो दृष्टः तृतीयस्थ चन्द्रः चतुर्थग्रहेण सह इत्थसालं करोति तर्हि बहुकालपर्यन्तं कारागारे स्थित्वा शरीरकष्टं तथा रोगञ्च अनुभवति। केन्द्रस्थचन्द्रं कुजः पश्यति चेत् बन्धने घातेनपीडा च भवेत्।[222] प्रश्नशिरोमणिग्रन्थे उक्तयोगं नाङ्गीकृत्य नीलकण्ठदैवज्ञः कथयति यत् चन्द्रस्य

---

[221]चन्द्रश्चाम्बुगपापेन मृत्युनाथेन योगकृत।
तदा गुप्त्यां मृतिश्चन्द्रकेन्द्रे मन्दयुगीक्षितः॥
(ताजीकनीलकण्ठी.प्रश्नतन्त्र.१६४)

[222](ताजीकनीलकण्ठी.प्रश्नतन्त्र.१६४)

केन्द्रस्थाने स्थितिः नापेक्षते। यदि कुजयुक्तो दृष्टश्चन्द्रश्चेत् स मानवः ताडन – पीडनेन बध्यते।[223]

प्रश्नशिरोमणिग्रन्थानुसारेण – यदि अष्टमेशचन्द्रयोः इत्थसालं भवति तर्हि मृत्युः अथवा लग्नेशः अस्तङ्गतो वा क्रूरदृष्टि तर्हि मृत्युः भवेत्। चरराशिगतश्चेत् बन्धनात् मुक्तिः जायते। यदि चन्द्रः कर्कराशौ भवेत्तर्हि अधिकदिनानन्तरं कष्टान्मुक्तिः प्राप्यते। तथैव यः मीनराशिगतश्चेत् विलम्बेन बन्धनान्मुक्तिः लभ्यते। यदि स्थिरराशिगतचन्द्रश्चेत् दीर्घकालं शत्रुत्वं भवेत्।यदि द्विस्वभावराशिगतश्चेत् सद्योमुक्तिः नैव किन्तु अत्यधिककालान्तरम् एव।

**पलायते तदा बद्धो व्ययगे लग्नोऽपि वा।**
**तृतीयनवमस्वामी व्ययगो लग्नपेन च॥**[224]

यदि व्ययेशः लग्नगतश्चेत्तथा तृतीयेशनवमेशौ द्वादशभावे लग्नेन इत्थसालं करोति तर्हि अपराधीना कारागारात् पलायितं भवेदिति ताजिकनीलकण्ठीये प्रश्नतन्त्रे लिखितं वर्तते। परन्तु योगेनानेन पण्डितरुद्रमणेः सहमतिः नास्ति। सः स्वप्रश्नशिरोमणिग्रन्थे एवं कथयति यथा –

---

[223]शनियुतदृष्टस्य चिरं गुप्तिस्थितिरङ्गकष्टमाधिरथो।
कुज युतदृष्टे केन्द्रे चन्द्रे घातश्च बन्धने पीडा॥
(प्रश्नशिरोमणिः.२.बन्धमोक्षप्रश्नः.१०)

[224](ताजीकनीलकण्ठी.प्रश्नतन्त्र -१६६)

**चन्द्रेऽगये वा नवमे तृतीयसंस्थेस्थसाले सुखतः प्रमोक्षः।**
**चन्द्रेऽगये वा सहजे त्रिधर्मनाथेत्थसाले सुखतः प्रमोक्षः॥**[225]

नवमभावगतः चन्द्रो वा लग्नेशस्य तृतीयस्थ ग्रहेण सह इत्थसालं करोति चेत् सुखपूर्वकं विमुक्तिः स्यात्। अथवा तृतीयस्थ चन्द्रो वा लग्नेशस्य तृतीयेशेन वा नवमेशेन इत्थसालं भवेत्तर्हि सुखपूर्वकं विमुक्तिः भवेत्।यदि दशमभावे द्वादशाधिपतिः लग्नाधिपतिश्च तयोः इत्थसालं भवति चेत् बन्धी पुरुषः यमराजस्य गृहं गच्छेत्।

यदि द्वादशभावे लग्नेशतृतीयेशयोः धर्मेशेन सह इत्थसालं तर्हि बन्धीजनः नाशं प्राप्नोति। दशमभावे चन्द्रस्तथा लग्नाधिपतिः तृतीयभावगतग्रहेण सह इत्थसालं करोति चेत् बन्धनान्मुक्तिः जायते। यदि लग्नेशः मित्रदृष्ट्या सप्तमेशं पश्यति तर्हि राजा न्यायनिर्णेता इति वक्तव्यम्। यदि पुरुषग्रह – लग्नेशं शत्रुदृष्ट्या पश्यति तर्हि तृतीयाधिपतिः धर्माधिपतिना इत्थसालं करोति चेत् स्वयमेव विमुक्तिं गच्छति। अस्मिन् श्लोके दृष्टिसम्बन्धित योगः उक्तो वर्तते। अस्मिन् विषये ताजिकविज्ञाननामकग्रन्थे **श्रीसुदर्शनाचार्यशास्त्री** अतिविस्तरेण एवं कथयति – यथा ताजिकविज्ञाने दृष्टिः त्रिप्रकारं भवति। १.मित्रदृष्टिः, २. समदृष्टिः, ३. शत्रुदृष्टिश्च। यः ग्रहः यस्मिन् भावे तिष्ठति तस्मात् तृतीय-पञ्चम-नवम-एकादशस्थानेषु मित्रदृष्टिं स्थापयति। प्रथमे, चतुर्थे, सप्तमे

[225](प्रश्नशिरोमणिः.२.बन्धमोक्षप्रश्न.७)

तथा दशमस्थानेषु  शत्रुदृष्टिः भवति। उक्तस्थानातिरिक्तस्थानेषु समदृष्टिः एव।[226]

प्रश्नशिरोमणिग्रन्थानुसारेण – यदि लग्नेशः केन्द्रगतः (१, ४, ७, १०) अस्ति तर्हि चिरकाले बन्धमुक्तिः भवेत्। यदि द्वितीयेशे चतुर्थभावे स्थिते सति  दीर्घकालबन्धनञ्जायते। यदि शुभग्रहः सप्तमेशश्च शुभदृष्ट्या लग्नेशं पश्यन्ति चेत् बन्धनम्। यदि चन्द्रः बृहस्पतेः (धनुः, मीनः) राशितः दक्षिणताकरणशीलो अर्थात् दक्षिणपार्श्वे भवति तथैव केन्द्ररहितस्थाने स्थितः (२, ३, ५, ६, ८, ९, ११, १२) शुभग्रहस्तथा स्वस्वामी अमुं पश्यति तर्हि सुखपूर्वकं बन्धनात् मुच्यते। यदि सप्तमेशे नवमभावे स्थिते सप्तमभावे शुभग्रहस्य  दृष्टिस्तर्हि स्वयमेव नष्टः जायते।

अधुना दिनस्य नक्षत्रं तथा बद्धपुरुषस्य जन्मनक्षत्राधारेण फलं वक्तव्यम्। दिनस्य नक्षत्रं नाम सूर्यस्य नक्षत्रात् गणनं करणीयम्।

**दिनर्क्षतः चतुर्भान्तर्बद्धर्क्षं बद्धनाशनम्।**
**ततस्त्रिभान्तर्मासेन तन्मोक्षश्च भवेत्ततः॥**[227]

दिनस्य नक्षत्रात् चतुर्नक्षत्रेषु मध्ये बद्धपुरुषस्य जन्मनक्षत्रम् भवेत्तर्हि बन्धीजनस्य नाशः, तेभ्यः चतुर्नक्षत्रेभ्यः अतिरिच्य नक्षत्रत्रयेष्वन्तर्भूतश्चेत् बन्धविमुक्तिः च भवेत्। नक्षत्रत्रयापेक्षया चतुर्नक्षत्रपर्यन्तं तर्हि मृत्युः भवेत्। नक्षत्रत्रयपर्यन्तं भवेत्तर्हि

---

[226](ता.वि.२.११३)

[227](प्रश्नशिरोमणिः.२.बन्धमोक्षप्रश्नः.१४)

दण्डमनुभूय विमुक्तिश्च सञ्जायते। तथैव चतुर्नक्षत्रपरिमितो शत्रुनाशः तथैव नक्षत्रत्रयमध्ये अस्ति चेत् मासचतुष्टयेषु विमुक्तिः स्यात् । तदनन्तरं नक्षत्रचतुष्टये मृत्युः, नक्षत्रत्रये मोक्षो नाम मुक्तिः लभ्यते।

**अवलोकनम्**

तृतीयोऽध्यायः अष्टचत्वारिंशत्यधिकत्रिंशत्श्लोकात्मकः। तत्र तु प्रथमम् आगमप्रश्नः तदनन्तरं दूरस्थ जीवितप्रश्नः, यात्राप्रश्नः, नौकाप्रश्नः, राज्यलाभविचारः, जयपराजय प्रश्नः, दिग्विजयप्रश्नः, दुर्गभङ्गप्रश्नः, वादप्रश्नः, रोगप्रश्नः, बन्धमोक्षप्रश्नःइत्यादिषु विषयाः चर्चितास्सन्ति।पण्डितरुद्रमणिस्तु जयपराजयप्रश्नः, दुर्गभङ्गप्रश्नः, यात्राप्रश्नः इत्यादिविषयेषु विशेषरूपेण ध्यानमदात्। तथैव आगमप्रश्नेष्वपि विशेषचर्चामकरोत्।

## चतुर्थोऽध्यायः

# विशेषोऽध्यायः - तृतीयभागः

**उत्पातप्रश्नः -**

सूर्यचन्द्रयोः ग्रहणात् सप्तदिनपर्यन्तं भूकम्पः, निर्घातः, रजोत्पन्नपातः, उल्कापातः, परिवेषः, इन्द्रधनुषः सूचनायस्मिन् देशे वर्तते तत्सम्बध्दः राजः नाशा प्राप्नोति। केतुग्रहस्य शिखा यस्यां दिशायां तथैव यस्मिन् देशे उदेति तथा यस्मिन् देशे नक्षत्राणां स्पर्शनं भवेत् तस्य देशस्य राजा नाशं प्राप्नुयात्। यत्र वृक्षाः अरुणादि वस्त्रैः आवृत्ता इव दृश्यन्ते तदा हरितवर्णमयं नश्यते अथवा शुष्कवृक्षाः हरितमयाः भवेयुः। तर्हि राज्ञः भङ्गोः भवेत्।विषयोऽयं विशेषरूपेण बृहत्संहितायाम् एवं कथितोऽस्ति –

**शुष्कविरोहे विर्यान्नसङ्क्षयः शोषणे च विरुजानाम्।**
**पतितानामुत्थाने स्वयं भयं दैवजनितं च।**[228]

अर्थात् शुष्क-रसहीनवृक्षेभ्यः स्वयमेव नूतनाङ्कुराः उद्भवन्ति। विना रोगेणैव वृक्षाः शुष्यन्ते चेत् जलस्य वा अन्नस्य हानिरेव। यदि पतितवृक्षाः स्वयमेव स्वस्थानात् निर्गताः भवन्ति अथवा उत्थानमिव दृश्यते तर्हि भविष्यकाले किमपि दैविकोत्पातो भवेत्।

पण्डितरुद्रमणेः आभिप्रायो दृश्यते – यदि कुज उत शनिना दृष्टः राहु वा शनिः अथवा ज्येष्ठानक्षत्रस्योपरिधूम्रकेतोः हृदयं चेत्

---

[228](बृहत्संहिता-४५.२८)

राज्ञः युद्धे वैरः तथैव रोगाद्भङ्गो जायते। यस्मिन् देशे विनासमयं निरन्तरं सप्तदिनपर्यन्तं कोलाहलः, मांसः, अग्निः, रुधिरस्य वर्षं किञ्चिद्वा अधिकञ्चेति तद्देशस्य राज्ञः भङ्गो भवेत्। वर्षर्तुसमये सप्तदिनपर्यन्तं विना आटङ्केन वर्षः भवेत्तर्हि सेनायाः क्षोभः तथैव यावन्समये धान्यं फलति तस्मात् अर्धं वा चतुर्थभागकाले धान्यं वर्धत्येव।

**प्रत्यगूहुर्महानाद्यः प्राङ्मुखाः सिन्धुसप्तमाः।**
**विपरीता दिशः सर्वा न प्राज्ञायत किञ्चन॥**[229]

महाभारते एवमुक्तमस्ति यथा- प्राच्यां प्रवहमानाः सिन्ध्वादि बृहन्नद्याः प्रवाहः तिरोगमनेन पश्चिमदिशि गच्छेत् तर्हि सर्वासु दिक्षु विपरीतमिव भाति। किमपि नैवावगम्यते।

अस्य प्रश्नस्य समाधानं प्रश्नशिरोमणिग्रन्थे एवं कथितं वर्तते – यदि नद्यः विपरितमार्गे वहन्ति, वापिषु हसन – आक्रन्दनरवाः श्रूयन्ते, अशोष्यकूपाः शुष्यन्ते तर्हि राज्ञः भङ्गो जायते। यस्मिन् देशे अकस्माद्रूपेण तोरणेअग्नि – केतोः उपरिष्ठात् पतेत् अथवा रात्रिसमये सर्वदा रोदनं श्रूयते तस्य देशस्य भङ्गो जायते। यस्मिन् देशे विना वर्षेण भूमिः भग्ना भवेत् अकस्मात्, निर्जलस्थानात् जलं निर्गच्छेत्, जलस्थाने पृथ्वी भग्ना भवति तर्हि राज्ञः अन्यसमृद्धराजस्य भङ्गो भवेत्।

**ततो राज्ञो धृतराष्ट्रस्य गेहे गोमायुरुच्चैर्व्याहरदग्निहोत्रे।**
**तं रासभाः प्रत्यभाषन्त राजन् समन्ततः पक्षिणश्चैत रौद्राः॥**[230]

---

[229](महाभारतम्.उद्योगपर्व-८४-६)

द्रौपदीवस्त्रहरणसमये राज्ञः धृतराष्ट्रस्य अग्निशालाभ्यन्तरे एकः मांसभक्षी पक्षी वेगेन इतस्ततः धावन्निव आसीत्। तं शब्दं लक्ष्यीकृत्य गर्दभाः स्वनम् अकुर्वन् तथा गृध्रादि भयङ्करपक्षिणः चतुर्षु दिक्षु अशुभसूचककोलाहलमकुर्वन्। अस्य शकुनस्य फलं प्रश्नशिमणिग्रन्थे एवं कथितं वर्तते – यदि दिने कोऽपि वन्यजन्तुः अथवा अन्यजीवः अत्यन्तनिर्भयरूपेण यस्मिन् देशे ग्रामादिषु च प्रविशन्ति तस्य राजा नष्ठो भवेत्। मनुष्याणां, पशूनां पक्षीणाम् अथवा देवतानां च अकस्मात् तुमुलयुद्धशब्दः अथवा परस्त्रिया सह रतिः, दिनस्य भङ्गः, असति सूर्यसम्भवः पश्चिमस्यांदिशायाम् काष्ठशब्दः, अथवा सूर्यनारायणः अत्यन्तकाले वा खण्डितो वा शुष्क इव दृश्यमानः तथा उभयोः सन्ध्ययोः मेघावृतः सूर्यनारायणः परिवेषयुक्त इव दृश्यते चेत् तस्य देशस्य नाशः एव।

अस्मिन् विषये आचार्य वराहमिहिरः बृहत्संहितायाम् अतिविस्तरेण कथयति यत् – वृषभ मिथुनयोः सूर्यस्यापेक्षया अन्यमासे यदि सूर्यः शुष्कः वा श्वेतवर्णयुक्त इव दृश्यते तर्हि विप्राणां कष्टकारो भवति, रक्तवर्णात् हेमन्तर्तोः अपेक्षया अन्य ऋतूणां भवति तर्हि क्षत्रियनाशकः, पीतवर्णः, शिशिरर्तोः अपेक्षया अन्यस्तर्हि वेश्यनाशकः, कृष्णवर्णश्चेत् शूद्रवर्गस्य नाशः एव[231]।

**सुनिर्मलेऽर्के चेच्छाया न प्रतीपारिभीतिदा।**
**देवपातप्रभङ्गाद्या दुर्भिक्षाग्न्यार्तिभङ्गदाः॥**[232]

---

[230](महाभारतम्.सभावर्प.७१.२२)

[231](बृहत्संहिता.३.२५)

[232](प्रश्नशिरोमणिः.२.उत्पात प्रश्नः.१३)

सुनिर्मले सूर्ये छायायाः प्रतीतिश्चेत् प्रतिकूलशत्रूभ्यः भये नैव भवेत्। यदि देवमूर्तिस्थानात् पतनं वा भङ्गं भवेत्तर्हि दुर्भिक्षं तथैव अग्निदुःखेन भङ्गो भवेत्। यदि सप्त वा अष्टौ वा दशदिनपर्यन्तं निरन्तरं काण्कडीवर्षं प्रचण्डवेगेन भवेत् अर्थात् गाढान्धकारमिव भवति दक्षिण-नैऋत्य-पश्चिमदिशासम्बन्धितशत्रुभिः सङ्कटो प्राप्यते वा। यदि गज-अश्व-गावः-रात्रिसमये प्रसन्नतारूपेण चेष्टां कुर्वन्ति, हसनेन, दुखेन तृणादिकं न भुञ्जते तर्हि राज्ञे सङ्करप्राप्तिरेव।

यस्मिन् देशे अग्निं विना सर्वत्र अहर्निशं धूमः सञ्जायते अथवा गृहादि ज्वल्यते चेत् तस्य देशस्य राज्ञः भङ्ग एव। विना ताडनेन अधिकरवः अथवा कूप-पर्वत-कुञ्जेषु भयानकशब्दो जायते चेत् राज्ञः सः भङ्गसङ्केतः। एतस्मिन् विषये बृहत्संहितायाम् एवं कथितं वर्तते-

**ज्वालाधूमक्वाथारुदितोत्क्रुष्टानि चैव कूपानाम्।**
**गीतप्रजल्पितानि च जनमरकायोपदिष्टानि॥**[233]

अर्थात् कूपेभ्यः ज्वाला, धूमव्यापनं, कूपजलात् उदितरूपेण स्वयमेव शब्दप्रतीतिः कूपात् गानस्वनः, सङ्गीतध्वनिः श्रूयते चेत् जनहानिः सम्पद्यते।

प्रश्नशिरोमणिग्रन्थे अग्रे एवं कथ्यते यथा- निर्मले दिने नक्षत्रमण्डलस्य प्रकाशः, रात्रौ अप्रकाशः भवेत् अथवा सूक्ष्मधूमैः अन्यथा भवेत् तर्हि राज्ञः हानिः जायते। विना मेघेन आकाशे इन्द्रधनौ

[233](बृहत्संहिता.४५.४८)

स्थिते राज्ञः हानिकारक। तथैव जलं विना अन्यवस्तुनः विशेषवर्षं भवति चेत् अधिकनाशः एव।

यदि विना मेघगर्जितेन वृष्टिः तथैव तडित्प्रकाशः अथवा स्थावराणां दशा जङ्गम इव भवति तथैव जङ्गमानां दशा स्थावराणाम् इव परिवर्तितः भवति तस्य देशस्य राज्ञः पदच्युतिरेव अथवा निर्जराणां स्थिरता भवेत् तर्हि निष्फलमिति वक्तव्यम्। यदि सूर्यः उदयास्तसमये धूमयुक्तदिशायां गन्धर्वपुरसमानावर्तित-रक्तवर्णयुक्तः दृष्टश्चेत् राज्ञः नाशसम्भावना। अत्र गन्धर्वपुरस्य नाम कथितम् अस्मिन् विषये वराहमिहिराचार्यस्य मतमिदं वर्तते यत् आकाशे मेघैः एतादृशरूपं निर्मीयते नाम आकाशे स्थित्वा भूमौ किमपि नगरं वा, वस्तु वा द्रष्टुं न शक्यते तत् नगरमेव गन्धर्वनगरम्। अत्र विभिन्नाकृतयः, विविधवर्णा वा रूपाणि दृश्यन्ते।[234] नारदसंहितायाम् एवं कथितमस्ति यथा- पूर्वादिदिक्षु यदि गन्धर्वनगरं दृष्टिगोचरञ्चेत् राजा-सेनापतिः – मन्त्री-राजपुरोहितः एते क्रमशः अनिष्टाः भवेयुः।

**गन्धर्वनगरं दिक्षु दृश्यतेऽनिष्टदं क्रमात्।**
**भूभुजां वा चमूनाथसेनापतिपुरोधसाम्॥**[235]

प्रश्नशिरोमणिग्रन्थे अग्रे एवं कथयन्ति यत्- यदि सन्दिदशायां श्वेतवर्णयुक्तस्तर्हि राज्ञे अर्थ-जय-सिद्धि-ऋद्धिप्राप्तिः।

---

[234](बृहत्संहिता.३६.२)

[235](नारद संहिता.४६.१)

यदि शनिर्वा कुजः रोहिण्याः शकटभेदनं कुरुतश्चेत् जगतः नाशे जायते इति। विषयेस्मिन् अनेकाः योगाः अपि कथिताः वर्तन्ते।

**मृगयाप्रश्नः -**

मृगविनोदक्रीडाविषये प्रश्नः क्रियते तर्हि सः मृगयाप्रश्नः इति कथ्यते। एतस्मिन् विषये प्रश्नशिरोमणिग्रन्थे एवमुक्तमस्ति यथा – सप्तमभावे यावत्लग्नस्थ दशमस्थशुभग्रहाणां दृष्टिः युक्तः तर्हि तावन्तः जीवाः पुरत आगत्य म्रियन्ते। यदि ते ग्रहाः स्ववर्गोत्तमनवांशे स्थिता सन्ति तर्हि तद्विगुणजीवाः म्रियन्ते। कदाचित् ते वक्राः तथा उच्चस्थाने भवन्ति तर्हि मृगविनोदे त्रिगुणजीवाः म्रियन्ते। कुज तथा बुधग्रहाः पापग्रहनवांशे स्थिता चेत् मृगकर्षणं नैव भवेत् अथवा पापग्रहात् विरुद्धदिने मृगविनोदं नैव भवेत् तथैव बलवान् चेदपि तद्विनोदं नैव सम्पद्यते।परन्तु विषयेस्मिन् श्रीनीलकण्ठदैवज्ञानां मतं किञ्चित् विरुद्धं भवति-

**सवीर्यौः कुजज्ञौ नृपखेटसिद्ध्यै न सिद्धिर्यदा वीर्यहीनाविमौ स्तः।**
**जलाखेटमाहुः सवीर्यैर्ग्रहक्षैर्जलाख्यैर्नगाखेटमाहुः॥**[236]

अर्थात् कुजबुधौ बलयुक्तौ भवतः चेत् राज्ञः अथवा किरातस्य मृगविनोदकार्यं सफलं भवेत्। उभयोः निर्बलत्वकारणेन मृगाकर्षणं विफलमेव। कुजबुधौ जलचरराशिगतौ चेत् जलचरप्राणिनां, पर्वतचरजीवानाम् उपलब्धि सम्भाव्यते। यदि कुजबुधयोः एकः जलचरराशौ तथैव अन्यः वनचरराशौ स्थितौ तर्हि उभयस्थितिजीवानां किरातकार्योपलब्धिः भवेत्।

[236](ताजीकनीलकण्ठी.मासप्रवेशफलानि.मृगयाविचारः.३४)

अस्मिन् विषये पण्डितरुद्रमाणेः मतमेवं वर्तते- यदि सप्तमेशो अथवा चन्द्रेण सह इत्थसालं करणशील कुजः शुक्रेण दृष्ट, जलचरराशौ स्थितः अथवा शुक्रचन्द्रौ जलचरराशौ स्थितौ मत्स्यविनोदं प्रापयतः। यदि बुध-शनि-मकर-कुम्भराशिःदशमभावः वा बुधस्य राशिश्चेत् अथवा चन्द्र वा लग्नेशेन सह बुधस्तथा शनेः इत्थसालं भवति तर्हि पक्षिणां हरणं भवेत्।

ताजिकनीलकण्ठीयग्नन्थे एवं कथितं वर्तते यथा मृगाकर्षणस्य प्रश्नलग्नात् बलहीनलग्नेशसप्तमेशौ केन्द्रगतौ चेत् मृगाणां क्लेशदायकः एव। उभयोः सबलताकारणात् मृगयाविनोदं सुलभं भवेत्।[237] अस्मिन् विषये पण्डितरुद्रमणिः श्रीनीलकण्टदैवज्ञस्य मतेन पूर्णरूपेण सहमतिं प्रकटयति। तथैव सः एवमप्युक्तवान्- यदि एतावुभौ (लग्नेशसप्तमेशौ) युक्तरूपेण एकस्मिन् भावे स्थितौ तर्हि आखेटनं नैव भवेत्। यदि लग्नेशः शुभग्रहश्चेत् तथैव सप्तमेशः बलवान् अस्ति तर्हि मृगया नैव भवेत्। सप्तमेशः महाबलयुक्तश्चेत् भयप्राप्तिः एव। बुधशुक्रौ राशिगतौ चेत् जलचराणां तथैव अन्यराशिषु चेत् स्थलचराणां मरणं सम्भव्यते।

**ज्ञभौमौ सबलौ सिद्धिरस्तांशे मृगया च्युतिः।**
**लग्नद्यूने तत्पती च हेतुस्तैर्जलराशिगैः ॥**[238]

अर्थात् सबलकुजबुधयोः मृगयोपलब्धिः तथा उभयानाम् अस्तङ्गत अथवा सप्तभावगतनवांशे चेत् मृगयाकर्षणात् वञ्चित

---

[237]ताजीकनीलकण्ठी.मुथहाफलाध्याय.मासप्रवेशफलानि.३५)

[238](ताजीकनीलकण्ठी.प्रश्नतन्त्र.समरसिद्धेः.१५१)

एव। लग्नगत-सप्तमगतौ-चतुर्थेश-दशमेशौ मृगयार्थं किमप्युपायंप्रापयेताम्। विषयोस्मिन् प्रश्नशिरोमणिग्रन्थे एवमुक्तमस्ति यथा कुजो वा कुजस्य राशौ (मेषः,वृश्चिकः) दशमस्थाने स्थिते तथा बृहस्पतिबुधाभ्याम् दृष्टौ चेत् अधिकसङ्ख्यया मृगयाकर्षणं सम्भवेत्। यदि सप्तमेशे चतुर्थे वा दशमस्थाने स्थिते स्वल्पमृगयाकर्षणमपि नैव सिध्येत्।

मित्रदृष्ट्या लग्नेशसप्तमेशयोः इत्थसालं भवति चेत् सुलभतया मृगयाकर्षणं सम्भाव्यते। तथैव वैरदृष्टिश्चेत् कष्टेन मृगयाकर्षणं सम्भाव्यते। सप्तमेशे लग्ने तथा लग्नेशे सप्तमे स्थिते निश्चयेन बहुमृगयाकर्षणं लभ्यते। यदि सप्तमाधिपतिः मित्रदृष्ट्या मन्दग्रहेण सह भवति तर्हि स्वल्पविनोदः सम्भवेत्।

**ताराबलेन मृगया शुभमशुभं वा वदेदथो तारा।**
**सत्यपि विद्धा पापैः सिंहादिभ्यो ददाति भयम्॥**[239]

ताराबलेन मृगयाकर्षणस्य शुभाशुभफलं कथ्यते। यदि नक्षत्राण्यपि पापग्रहैः विद्धानि तर्हि सिंहादि क्रूरमृगैः भयं जायते। प्रष्टुः जन्मनक्षत्रे स्खलनं, विपदि चेत् बहुदुःखं, मृत्युः, अङ्गच्छेदः, प्रत्यरिपतनं तथैव अन्यनक्षत्रेषु शुभफलं सम्भाव्यते। यदि किरातकस्य तथा चन्द्रस्य राश्योः मध्ये यावन्ति नक्षत्राणि अथवा भावः पापग्रहयुक्तश्चेत् स एव राशिः वा नक्षत्राणां जातिः समानस्तर्हि तावन्तः प्राणिनः म्रियन्ते। एतस्मिन् विषये श्रीनिलकण्ठदैवज्ञोऽपि सहमतिंप्रदर्शयति।

---

[239](प्रश्नशिरोमणिः.२.मृगयाप्रश्नः.१०)

यदि तानि नक्षत्राणि अथवा भावः शुभग्रहयुक्तः स्यात् तर्हि तावन्तः जीवाः पलायन्ति। तिथि-वार-पुरवर्णं योजयित्वा वर्गः करणीयः तथैव अर्धं कृत्वा इष्टघटिकाभागदानेन यः अवशिष्यते तस्यैव समानसङ्ख्यासहितप्राणिनः भूयन्ते। अथवा वर्तमान नक्षत्र-वार-गततिथि-योजयित्वा एकं न्यूनीकृत्य वर्गः करणीयः। तस्यार्धभागं त्रयात् नवभागदानेन शेषाङ्कसमानजीवानां वधः उक्तः वर्तते। तथैव शेषस्य भागदानेन यः एक एव अविशिष्यते सैव पालयते। यदि राशिः वक्ग्रहेण विरुद्धश्चेत् द्विगणं पलायते।

**मूकप्रश्नः -**

मूकप्रश्नः द्विप्रकारको भवति यथा-

(i) वाचिकप्रश्नः

(ii) मानसिकप्रश्नः च ।

वाचिकप्रश्ने प्रश्नकर्ता यं विषयमधिकृत्य पृच्छति तं विशयं दैवज्ञं स्पष्टरूपेण उक्त्वा तस्य फलं ज्ञेयं भवति। किन्तु मानसिके अथवा मूकप्रश्ने प्रश्नकर्ता स्वमन्तव्यविषयं न दर्शयति। अपितु सः स्वमन्तव्यं (प्रश्नं) तथा तस्य परिणामं (फलं) उभयमेव ज्योतिषस्य अग्रे पृष्टुमिच्छति। अतः मूक अथवा मानसिकप्रश्नकरणसमये ज्योतिषी सावधानपूर्वकं प्रश्नकुण्डल्याः अध्ययनं कुर्यात्। अतः प्रप्रथमं पण्डितरुद्रमणेयनुसारं धातुवादप्रश्नस्य विचारः करणीयः।

**धातुवादप्रश्ने विचारः -**

**लग्नेशो धातुरूपः स्याद्धातुवादी स्मराधिपः।**
**भानुशीतद्युती लभकर्त्तारौविति चिन्तयेत्॥**[240]

लग्नेशः धातोः रूपः भवति। तथैव सप्तमेशः धातुवादी, सूर्यचन्द्रौ लाभकरणरतौ भवतः। यदि पापग्रहस्य दृष्टिः नैव भवेत्तर्हि लग्ने पापग्रहः शूभग्रहः भवति। तथैव यदि लग्नेशः लग्नं पश्यति, पापग्रहः नपश्यतिस्तर्हि धातुवादप्रश्नकर्तुः सुखं भवेत्। यदि पापग्रहःपश्यति तर्हि सुखं नैव स्यात्। यदि पापदृष्टिवर्जिते लग्नेशे द्वादशभावे स्थिते मृत्युः, द्वितीये हानिः, षष्ठे बन्धनं तथैव अष्टमे चेत् नाशः एव संभव्यते।

यदि लग्ने बलयुक्तौ कुजसूर्यौ स्थितौ तर्हि सुवर्णं, शुक्रचन्द्रौ स्थितौ तर्हि रजतं, बुधबृहस्पती चेत् मणियुक्तसुवर्णं, राहुशनिः तर्हि लोहः लभ्यते। द्वितीयभावात् धातुः, अष्टमात् वादस्थितिः एवं सप्तमात् तथा द्वादशात् धातुः वादस्थितिश्च वक्तव्या। यदि केन्द्रे (१, ४, ७, १०) वा एकादशे बलवान् शुभग्रहे स्थिते धातुवादी, धातुज्ञः भवेत्। यदि सौम्यपापग्रहयुक्तलग्ने चन्द्रः शीर्षोदयराशिगतः तर्हि धातुज्ञानस्य लाभः कथ्यते।

अस्मिन् धातुवादप्रश्ने पण्डितरुद्रमणिः धातुज्ञानविधिः अतिविस्तारेण अवोचत्। ज्योतिष्शास्त्रस्य प्राचीनाचार्याः संसारस्य समस्तपदार्थं त्रिधा संविभजन्। सौलभ्यार्थम् एतेषां वर्गाणां नामानि धातुः मूलः जीवः इति स्थापितानि।

---

[240](प्रश्नशिरोमणिः.२.धातुवादप्रश्नः-१)

धातुः द्विप्रकारको भवति धाम्य-अधाम्य भेदेन। धाम्यस्य अष्टभेदाः भवन्ति। यथा-(i)सुवर्णम् (ii) रजतम् (iii) ताम्रम्(iv) काञ्चनम्(v) कांस्यम् (vi) लोहः(vii) सीसम् (viii) पीतम्। धाम्यधातुः रूपद्वये भवति घटितः, अघटितश्च । घटितधातुः आभूषण-पात्राणि-एवम् अन्यसामग्रिषु दृश्यते। तथैव अघटितधातुः स्वस्य निजरूपे लभ्यते। अधाम्यधातोरपि अष्टभेदाः भवन्ति यथा – (i) मौक्तिकम् (ii) पाषाणम् (iii) हरितम् (iv) मणिः (v) शिला (vi) रेणुः (vii) मरकतम् (viii) पद्मरागञ्च।

मूलवर्गः अतिविस्ताररूपेण व्यापको भवति। एतस्मात् सर्वप्रकारकवृक्षाः, सस्यानि, वनस्पतिः, लताः, गुल्माः, वल्लयः एवम् उत्पद्यते। अत्र चत्वारः भेदाः भवन्ति यथा (i) वल्कलम् (ii) पत्रम् (iii) पुष्पाणि (iv) फलानि च। एतेऽपि भक्ष्य एवम् अभक्ष्य तथा सुगन्धित - दुर्गन्धित एवं उपयोगी – अनुपयोगी भेदेन अनेकप्रकारकाः भवन्ति।

जीवः चतुर्विधः भवति (i) द्विपदः (ii) चतुष्पदः (iii) बहुपदः (iv) अपदश्च। चतुष्पदजीवानां चत्वारः भेदाः अङ्गीक्रियन्ते (i) खुरी (ii) नखी (iii) दन्ती (iv) श्रुङ्गी च।

धातुः – मूलं - जीवः एतेषु त्रिषु वर्गेषु पदार्थानां वर्गीकरणस्य उद्देश्यं न केवलं धातुप्रश्ने विचारणयीय पदार्थस्यैव ज्ञानार्जनम् अपितु अनेन वर्गीकरणाधारेण तस्करितवस्तोः तथैव चोरस्य स्वरूपादिकज्ञानमपि प्राप्तुं शक्यते। जीवयोनेः विविधभेदाधारेण शास्त्रेऽस्मिन् चोरस्य जातिः, अवस्था, आकृतिः, रूपं, वर्णं, स्त्रीपुरुष इत्यादि ज्ञानमपि सुलभतया ज्ञातुं शक्यते। अत एव

प्रश्नशिरोमणिग्रन्थे पण्डितरुद्रमणिः विषयममुम् अतिविस्तारतया चर्चामकरोत्।

**चिन्ताप्रश्ने विचारः -**

सूर्यः स्वराशिगतश्चेत् राज्ञः राज्यचिन्ता भवेत्। चन्द्रः स्वक्षेत्री चेत् क्षेत्रखननचिन्ता भवेत्। कुजः स्वक्षेत्रगतश्चेत् शत्रुराजद्वारा भयचिन्ता, बुधः स्वक्षेत्रगतश्चेत् खल तथा आयुधचिन्ता करणीया। बृहस्पतिः स्वक्षेत्रगतश्चेत् धर्म, मित्र तथा राजचिन्ता करणीया। शुक्रः स्वराशिगतश्चेत् सकलशुभचिन्ता, शनिः स्वक्षेत्रगतश्चेत् राजद्वारे विवादचिन्ता वक्तव्या। विषयोऽयं यथोक्तं तथैव प्रश्नवैष्णवग्रन्थेऽपि कथितोऽस्ति। परन्तु केवलं शनिस्वक्षेत्रगत सन्दर्भस्य फलमेकमेव भिन्नं दृश्येत। यथा – मनुष्याणां, भूमि-गृह-पितृणां चिन्ता करणीयेति दृश्यते।

अग्रे लग्नादि द्वादशभावेषु सूर्यादिग्रहाणां स्थिति विषये चिन्ता क्रियते। विषयममुमन्याचार्याः अपि यथातथं स्वीचक्रुः यथा –

**पाखण्डिकूटानृतमन्त्रचिन्ता धने भवेत्कार्यबलस्य चिन्ता।**
**त्रये चतुर्थे च विवादचिन्तासुतेसुतानांरिपुगेऽध्वनश्च॥**[241]

अर्थात् यदि लग्ने सूर्ये स्थिते सति पाखण्डिजनस्य कपट – असत्य तथा मन्त्रस्य चिन्ता करणीया। सूर्ये द्वितीयभावे स्थिते कार्यबलचिन्ता, तृतीये अथवा चतुर्थे चेत् विवादचिन्ता , पञ्चमे चेत् पुत्रचिन्ता , षष्ठभावगतश्चेत् सूर्यात् मार्गस्य कार्यचिन्ता भवति।

---

[241](प्रश्नशिरोमणिः.२.चिन्ताप्रश्नः.८६)

सप्तमे चेत् स्त्रीणां, अष्टमे चेत् नौकस्य, नवमे चेत् विदेशस्थजनचिन्ता, दशमे चेत् राज्ञः अर्थकार्यचिन्ता, एकादेशे चेत् धनलाभचिन्ता, द्वादशभावे सूर्यश्चेत् मार्गस्य तथैव शत्रो चिन्ता करणीया। एवं प्रकारेण पण्डतरुद्रमणिः अन्यग्रहाणां फलमप्यति विस्तारतया अचर्चयत्।

एतदनन्तरं पुनरेवमप्युक्तम् यत् – शुक्रस्य इत्थसाले, बुधस्य इत्थसाले तथा बृहस्पतेः इत्थसाले यदि चन्द्रः स्थिते अधिकस्त्रीभिः विवाहचिन्ता क्रियते। एवं सप्तमभावे सूर्यस्य इत्थसाले चन्द्रश्चेदपि विशेषरूपेण स्त्रीभिः सह विवाहचिन्ता भवतीति उक्तमासीत्। विषयमिदमन्ये आचार्याः अपि आमनन्ति।

**मुष्टिप्रश्नः -**

यदि प्रष्टा दैवज्ञस्य परीक्षार्थं किमपि वस्तुं मुष्टिं स्थापयित्वा स्वमुष्टौ किमस्ति इति पृच्छति तर्हि सः प्रश्नः मुष्टिप्रश्नः इति कथ्यते। एतत् ज्योतिषशास्त्रस्य महत्वपूर्णज्ञानं भवति। अमुं पण्डितरुद्रमणिरपि प्रश्नशिरोमणिग्रन्थे अतिविस्तारतया विचारमकरोत् यथा –

**यद्वाचेच्छुक्रचन्द्रशनयोऽम्बुवि जातीफलं तथा।**
**धातुश्च मृत्तिका चाथ बुधमन्दारराहवः॥**[242]

यदि शुक्रचन्द्रौ तथा शनिश्च चतुर्थभावे स्थितौतर्हि जायफल-धातु-मृत्तिका इति कथ्यते। यदि बुधशनिकुजराहुग्रहाः लग्ने नवमे

[242](प्रश्नशिरोमणिः.२.द्रव्यबहबहुत्वे चिन्त्यम्.७०)

स्थिताः चेत् श्वेतफलं कथ्यते।बृहस्पतौतृतीयभावे, बुधे द्वितीयभावे स्थिते रेश्मीवस्त्रमिति कथ्यते।

कुजे केन्द्रे (१, ४, ७, १०) स्थिते मुद्गाताम्रौ, चन्द्रराहू चेत् शङ्खादिः, बुधश्चेत् लवणकमले, राहुः चेत् शस्त्रलोहौ, शनिश्चेत् श्यामपुष्पाणि, राहुचन्द्रशुक्राः चेत् दाडिमफलं, राहुशनिबुधाश्चेत् एरण्डफलं, बुधराहू चेत् मालतीपुष्पं, कर्कराशिगतशुक्रे केन्द्रे स्थिते रजतरूप्यकं मुष्टावस्तीति वक्तव्यम्। एतस्मिन् विषये प्रश्नचण्डेश्वरग्रन्थे एवमुक्तमस्ति –

**गुरौ रत्नयुतं हेम सूर्ये मौक्तिकमुच्यते।**
**कुजे रत्नं शनौ लोहमस्थिजातं तु शेषके॥**[243]

यदि बलयुक्तगुरौ प्रश्नलग्ने स्थिते रत्नखचितसुवर्णमिति वक्तव्यम् परन्तु पण्डितरुद्रमणिः अमुं नवम-दशम-सप्तमगतगुरुद्वारा अवोचत्। तथैव दशमभावे बृहस्पतौ स्थिते आम्रादिफलं, कुजशुक्रौ त्रिकोणे (४, ५) चेत् मुष्टौ मृत्तिका इति वक्तव्यम्। शुक्रद्वारा दृष्टचन्द्रे केन्द्रे स्थिते लवणाम्लफलं वक्तव्यम्।

सूर्यः केन्द्रे, बुधः नवमे, कुजः पञ्चमे स्थितः तर्हि मधुरफलं वक्तव्यम्। यदि चन्द्रे षष्ठस्थाने स्थिते पिप्पलफलं, शुक्रयुक्तचन्द्रः षष्ठभावे भवति इलाफलम्, शनिः षष्ठे, कुजः नवमे चेत् रक्तवर्ण, श्यामवर्ण, गोलकार अथवा श्यामतिल – मसूरादि भवतीति

---

[243](प्रश्नचण्डेश्वरः.५.१)

वक्तव्यम्। यदि एकादेशे शुक्रः तर्हि गोधूमः, सूर्यः तृतीये चेत् अर्कपत्रमिति वक्तव्यम्।

**अवलोकनम्**

चतुर्थेऽध्याये द्वाविंशत्यधिकशतश्लोकाः सन्ति। तत्र आदितः उत्पातमृगयाचिन्तामुष्टिधातुवादप्रश्नाः वर्तन्ते। तत्कालेन्दु इत्यादि विषयाणां चर्चा अस्ति। उत्पातविषयन्तु सामान्यतया संहिताग्रन्थेष्वेवोपलभ्येत परन्तु तस्य प्रामुख्यं विज्ञाय पण्डितरुद्रमणिः विषयममुं प्रश्नशास्त्रे अयोजयत्। एषः प्रत्येकस्य प्रश्नस्य विश्लेषणरूपेण चर्चामकरोत्।

## विशेषोऽध्यायः- चतुर्थभागः

**चौरप्रश्नः -**

कठोपनिषदनुसारेण यो नरः पापकर्मभ्यः न निवृत्तः, यस्येन्द्रियाणि चञ्चलताकारणेन अशान्तनि तथैव यस्य चित्तम् अशान्तं भवति, तादृशानां जनानाम् आत्मज्ञानप्राप्तिर्नैव भवेत्।[244] एतस्मिन् विषये कर्मविपाकसंहितायामेवमुक्तमस्ति यथा– दुष्कर्मकुर्वाणां दरिद्राणां मरणानन्तरमपि मरणमेव सम्पद्यते। तत्कर्मानुसारेण अनेकप्रकारकगतयोऽपि सम्भवति -

**भृतेभ्यः प्रमृता यान्ति दरिद्राः पापकर्मिणः।**
**गतिं नानाविधां यान्ति जन्तवः कर्मबन्धनात्॥**[245]

एवं प्रकारेण कुकर्मनिन्दायां सत्यपि अत्र पञ्चकुकर्माणि महापातकानीति उपनिषदः उद्घोषयन्ति। **स्तेनो हिरण्यस्य सुरां पिबच गुरोस्तल्पमावसन्ब्रह्मण च। एते पतन्ति चत्वारः पञ्चमश्चचरस्तैरिति।**[246] अर्थात् सुवर्णचोरः, मद्यपानरतः, गुरुस्त्रीकामी, ब्रह्महत्यापातकः एते चत्वारः पातकाः भवन्ति। पञ्चमस्तु एतैः कुर्वद्भिः यस्यसंसर्गः सः पञ्चमपातको भवति।

---

[244]नाविरतो दुश्चरितान्नाशान्तो नासमाहितः।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्॥ (कठोपनिषद्.१.२.२४)

[245](कर्मविपाक संहिता.१-३७)

[246] (छान्दोग्योपनिषद्. ५.१०.९)

अस्मिन् मन्त्रे चौरं कर्म सर्वप्रथमं स्थापितं तथैव पण्डितरुद्रमणिरपि इदं कर्म अतिविस्तारेण वर्णितवान्। अस्मिन् अध्याये चोरवस्तु अथवा चोरप्राप्तिरप्राप्तिमात्रमेव न अपि तु चोरस्य नाम अपि ज्ञातुं शक्यन्ते।अत्र सर्वप्रथमं तस्करितवस्तु पुनः प्राप्यते वा नवेति प्रश्ने विचारः क्रियते। तस्य अन्वेषणविधिरपि उच्यते।

**चौर्यधनचौरयोः स्थानादिलाभप्रश्नः -**

अष्टमाधिपतौ सप्तमे वा अष्टमभावे स्थिते प्रष्टुः तस्करितधनं पुनः प्राप्यते। यदि अष्टमेशस्य तथा धनेशस्य इत्थसालं भवति तर्हि नष्ट तथा हृतवस्तुनः लाभो वक्तव्यः इति प्रश्नशिरोमणिग्रन्थे उक्तं वर्तते। परन्तु श्रीमन्नारायणदासस्य मतमस्माद्विपरीतं दृश्यते। तदभिप्रायानुगुणं यदि अष्टमाधिपतिः सप्तमे वा अष्टमभावे स्थितःतर्हि प्रष्टुः तस्करितधनं नैव प्राप्यते।[247] प्रश्नशिरोमणिग्रन्थे अग्रे एवमपि कथितं वर्तते यथा-धनेशलग्नेशयोरुपरि दशमेशपञ्चमेशयोः शुभदृष्टिः प्रसरति चेत् राजा चोरं ग्रहीत्वा तस्माद्धनं सङ्गृहणाति। धनेशः सूर्येण सह अस्तङ्गतश्चेत् चोरः उपलभ्यते। परन्तु धनं नैव लभ्यते। यदि द्रव्येशः किञ्चिदुदितःचेदपि किञ्चिद्धनं लभ्यते।

ताजिकनीलकण्ठीये एवं कथितमस्ति यत् – अष्टमेशदशमेशयोः इत्थसालं भवति चेत् राजा वा न्यायाधिपतिः चोरपक्षं वहतः।[248] एतद्विषयं पण्डितरुद्रमणिरपि अङ्गीकरोत्येव।

[247](प्रश्नवैष्णवः.१०.१६)

[248](ताजीकनीलकण्ठी.प्रश्नतन्त्र.चिन्तामणौ.९१)

प्रश्नशिरोमणिग्रन्थे अग्रे एवं कथितमस्ति यत् द्वितीयः वा लग्नः वा लग्नाधिपतिदृष्टिरहितत्वात् धनलाभे सत्यपि कदाचित् प्राप्तिः नैव सम्भवेत्। नवमस्थे वा तृतीयस्थग्रहेण सह धनाधिपतेः इत्थसालं भवति अथवा धनेशः नवमे वा तृतीयभावे तर्हि तद्धनं विदेशं गतं स्यात्। अथवा लग्ने चरराशिगतचन्द्रश्चेतदपि अन्यदेशे प्रतिनिवृत्तं भवेत्। अत्र लग्ने चरराशिगतचन्द्रश्चेत् परदेशो उक्तः अमस्ति परन्तु पण्डितमुकुन्दवल्लभमिश्रामतानुसारेण यदि लग्ने चरराशिगतचन्द्रः भवेत् अथवा नैव भवेत् परन्तु चरनवांशश्चेदपि दूरदेशगतत्वमेव वक्तव्यम्।

**स्थिरे स्थिरांशे स्वजनैर्गृहान्तिके चरे परेणापहृतं न चान्तिके।**
**धनं समे न द्वितनौ च मध्यगं दिशस्तनौ व्योम मन्दाम्बुगे विधौ॥**[249]

अर्थात् प्रश्नलग्नं स्थिरराशिगतश्चेत् स्थिरनवांशगतश्चेदपि तत् वस्तु स्वजनैः चोरितमिति भाव्यते। तथैव गृहसमीपे कुत्रापि स्थापितमिति मन्यते। अथवा स्वयमेव कुत्रचित् निधाय विस्मृतं स्यात्। यदि चरलग्नं चरनवांशगतञ्चेत् कोऽप्यन्यः चौर्यं कृत्वा दूरं नीतवान् स्यात्। एवं द्विस्वभावलग्नः तथा नवांशश्चेत् समीपनिवासी एव हृतवानिति मन्तव्यम्। अथवा तत् वस्तु दूरं गतं स्यात् समीपग्रामेऽपि न भवेदित्यर्थः।

प्रश्नशिरोमणिग्रन्थे एवं कथितमस्ति यथा लग्नेशसप्तमेशयोः इत्थसाले सत्यपि चोरः गृहे एव स्यात्। सप्तमेशे केन्द्रे (१, ४, ७, १०) स्थिते चोरः पुरमध्ये भवेत्। लग्नस्योपरि

---

[249](फलितमार्तण्ड.प्रश्नफलाध्यायः.९९)

सूर्यचन्द्रयोः दृष्टिः स्थिते स्वजन एव चोर इति मन्तव्यम् परन्तु लग्नस्योपरि सूर्यात् वा चन्द्रयोः कस्यापि एकस्य दृष्टिश्चेत् चोरः कस्यचित् बलिष्टपुरुषसमीपे स्थितवानित्यर्थः। परन्तु श्रीनीलकण्ठदैवज्ञस्य विचारः अयमस्ति यत् लग्नस्योपरि सूर्यचन्द्रयोः दृष्टिश्चेत् गृहसमीपवर्ती एव चोरः इति ज्ञातव्यम्।[250]

पण्डितरुद्रमणेः कथनानुसारेण सप्तमेशः शनैश्चरश्चेत् तथैव शनिः चन्द्रेण दृष्टश्चेत् छल-कपट-पाखण्डी-चोर च भाव्येत। यस्य धनं नष्टं जातं तस्य विचारः लग्नात् करणीयः। तथैव सूर्यचन्द्रौ नष्टवस्तू भवतः। सप्तमेशात् चोरस्य रूपरेखादि विचारः करणीयः। अस्मिन्विषये पण्डितनीलकण्ठः किञ्चिद्विशेषरूपेण कथितवान् –

**नष्टवीतवित्तलब्धेः पृच्छायां चौरसप्तमं ततो लाभः।**
**हिबुकं द्रव्यस्थानं लग्नं चन्द्रश्च धननाथः॥**[251]

अर्थात् नष्टधनस्य ज्ञानाय सप्तमस्थानं चोर इति मन्तव्यम् तथैव चोरितधनस्थानं चतुर्थः भवति। लग्नचन्द्रौ धनाधीशग्रहाविति मन्येते।

पण्डितरुद्रमणेः कथनानुसारेण लग्नेशः सप्तमभावे तथा वक्री सप्तमाधिपतिः लग्ने स्थितः यदि यत् वस्तु चोरितं तत् पुरे एव भवेत्। किन्तु केनापि प्रकारेणापि नैवोपलभ्यते। पापग्रहसहितः लग्नेशः सप्तमेशं पश्यति, धनेशः बलवान् तथा सूर्यचन्द्रावपि बलिष्टौ चेत् तद्धनं प्रत्यक्षरूपेण चोरितं भवति। यदि क्षीणचन्द्रः

[250](ताजीकनीलकण्ठी.प्रश्नतन्त्र.चिन्तामणौ.९८)

[251](ताजीकनीलकण्ठी.प्रश्नतन्त्र.९०)

लग्नेशेन युक्तश्चेत्, सप्तमेशः बलवान् चेत्, तदा चन्द्रः लग्नेशात् दुर्बलो भूत्वा लग्नेशेन सह स्थितः तर्हि साक्षात् पुरत एव धनं चोरितं स्यात्।

**जायेशो भास्करान्मृत्यो प्रत्यक्षं तद्धृत धनम्।**
**लग्नेशः सप्तमं नैव वीक्षते बलवान् विधुः॥**[252]

अर्थात् सप्तमेशः सूर्येण सह अष्टमभावे स्थितः तर्हि तद्धनं पुरतः एव चोरितं स्यात्। लग्नेशः सप्तमभावं नैव पश्यति, तदा बलवान् चन्द्रः पापग्रहयुक्तश्चेत् चोरैः तद्धनं प्रत्यक्षेण अपहृतमिति मन्यन्ते। सप्तमेशे अस्तङ्गते अथवा केन्द्रे (१, ४, ७, १०) स्थिते सति चोरः म्रियते इति मन्तव्यः। चन्द्रस्य राश्याधिपतिः चन्द्रं पश्यति चेत् नष्टद्रव्यस्य प्राप्तिः भवेत्।सप्तमभावे पापग्रहे स्थिते राजाज्ञया चोरः मरणं प्राप्स्यति। शुभग्रहश्चेत् तस्करितं नैव सम्प्राप्यते। बलवान् चन्द्रो वा क्षीणचन्द्रश्चेत्  शीघ्रमेव प्राप्तिः सम्भाव्यते। किन्तु यदि लग्नाधिपतिः सप्तमभावगतश्चेत् हृतवस्तुनः प्राप्तिः नैव सम्भवेत्।

ताजिकनीलकण्ठीये एवं कथितमस्ति यथा लग्नं सप्तम-दशमभावस्थम् उच्चङ्गतबलवान्ग्रहेण सह स्थितं चेत् तदा तस्य ग्रहस्य जाति-वर्ण-गुण-स्वरूप-दिशादिकमनुसारेण चोरस्य सहायकचोरः निश्चेतव्यः। उक्तयोगः सर्वदा न भवति इति कारणेन सप्तमेशग्रहबलात् विचारः करणीयः।[253]

---

[252](प्रश्नशिरोमणिः.२.चौर्यधनचौरयोः.स्थानादिलाभप्रश्नः.१३)

[253](ताजीकनीलकण्ठी.प्रश्नतन्त्र.चिन्तामणौ.१०१)

रावणसंहितायाम् एवं कथितमस्ति यथा – तृतीयाधिपतितः गृहस्य तथा षष्ठाधिपतितः बहिस्थ चोरस्य विचारः करणीयः।[254] तथापि एवं कथितमस्ति –

**द्रव्यमंशकतश्चोरान्द्रेक्काणैरादिशेत्सुधीः।**
**दिग्देशकालराशिभ्यो वयो जातिं च लग्नपात्॥**[255]

अर्थात् नवांशादद्रव्यं, द्रेष्काणात् चोरः वक्तव्यः तथा राशितः दिशा, स्थानं एवं समयः तथा लग्नेशात् चोरस्य आयुः एवं जातिः वक्तव्या।

अस्मिन् विषये प्रश्नशिरोमणिग्रन्थे एवं कथितं वर्तते यथा यदि लग्नेशः लग्नश्चेत् अथवा सप्तमेशेन सह युक्तः तथैव चन्द्रः स्वराशिगतनवांशे स्थितःतदाचोरः स्वगृहे एव स्यात्। सप्तमेशे यदि उच्चस्थाने स्थिते स्वामिमत्रोःअन्यतरौ चोरौ इति। यदि सप्तमेशः स्वनवांशे वा त्रिंशांशे वा द्रेष्काणे सति स्वजन एव चोरः इति भाव्यते। सप्तमेशसूर्यौ लग्ने, द्वितीये, द्वादशभावे स्थितौतर्हि पिता एव चोरः भवेत्। सप्तमेशः चन्द्रश्चेत् माता, कुजश्चेत् भ्राता, बुधश्चेत् मित्रं, बृहस्पतिश्चेत् पुत्र अथवा चञ्चलताद्वारा गृहाधिकारी चोर इति मन्यते। यदि सप्तमेशः शुक्रश्चेत् स्त्री, शनैश्चरः चेत् स्वगृहदासी चौर्यमकुर्वन् इति भाव्यते।

अस्मिन् विषये श्रीनीलकण्ठदैवज्ञः सप्तमेशग्रहं नाङ्गीकृत्य ग्रहाणां नीचगतिस्थितिद्वारा कथितवान्। यथा -सूर्यः

---

[254](रावण संहिता.६.८ कल्प)

[255](रावण संहिता.६.८ कल्पः-पृ.सं.११४१)

नीचस्थकारणेन गृहस्वामिनः पिता चोरः इति। यदि चन्द्रः नीचङ्गतश्चेत् माता, शुक्रः नीचङ्गतश्चेत् स्त्री, यदि स्त्री एव गृहस्वामिनी तर्हि तस्याः पतिरेव चोरः इति मन्तव्यः। यदि शनिः नीचङ्गतः सेवकः, कुजः नीचङ्गतस्तर्हि पुत्रो वा अग्रजो वेति, बुधः नीचङ्गतश्चेत् स्वकीयजनाः वा मित्राणि वा मन्तव्यानि।[256]प्रश्नशिरोमणिग्रन्थे – एतस्मिन् विषये अन्यत् मतमपि प्रकटितं भवति यथा -

**लग्नेन्दू चेच्छनिः पश्येच्चौरः पाखण्डरूपधृक्।**
**गायकस्तु भृगुश्चौरो विशेषोऽयमुदाहृतः॥**[257]

अर्थात् लग्नं तथा चन्द्रं शनैश्चरः पश्यति चेत् पाखण्डरूपधारी चोरः भवेत् तथैव शुक्रः पश्यति चेत् गायकः चोरः, सप्तमेशे सप्तमभावे स्थिते वधु एव द्रव्यहारी भवेत् । सप्तमे सूर्यो वा शुक्रश्चेत् पिता चोरः, बृहस्पतिश्चेत् गृहस्वामी, शनिश्चेत् दासी, बुधश्चेत् स्वयमेव, कुजश्चेत् पुत्रो अथवा कनिष्टभ्राता चोरः इति मन्तव्यम्। यदि सप्तमभावे कोऽपि ग्रहः न भवेत्तर्हि लग्ने पूर्णचन्द्रश्चेत् परपुरुष एव चोरः लग्नगतमेषादि राशिभिः विषययोयं धृतः भवेत्।

यदि चन्द्रः स्थिरराशिगतश्चेत् चोरः यस्याम् दिशायाम् भवति तस्यां तस्य गृहस्य द्वारमेकं स्यात्। लग्नात् चन्द्रः यस्यां

---

[256]चन्द्रे माता शुक्रे भार्या मन्दे सुतो भवेन्नीचे।
जीवे गृहप्रधानं भौमे पुत्रोऽथ वा
भ्राता॥(ताजीकनीलकण्ठी.प्रश्नतन्त्र.चिन्तामणौ.१०२)

[257](प्रश्नशिरोमणिः.२.चौर्यधनयौरयोः.स्थानादिलाभप्रश्नः.२१)

दिशायां भवति तस्मिन् पार्श्वे चोरस्य गृहं वर्तते। स्थिरराशिगत चन्द्रश्चेत् गृहस्य द्वारमेकं, द्विस्वभावराशिगतश्चेत् द्वारद्वयं भवेत्।

अत्र प्रश्नशिरोमणिग्रन्थे लग्नः पूर्वदिशा इति, दशमभावः दक्षिणदिशेति, चतुर्थभावः उत्तरदिशेति, सप्तमभावः पश्चिमदिशेति कथितं वर्तते। परन्तु प्रश्नचण्डेश्वरग्रन्थे उक्तभावेषु चन्द्रस्थित्याधारेण चोरस्य गृहदिक् उक्ता वर्तते।[258] परन्तु प्रश्नभूषणग्रन्थे एवम् कथितं वर्तते यथा—

**वक्तव्या नष्टवित्ताशा केन्द्रोपगतखेचरैः।**
**अभावे प्रश्नलग्नर्क्षाद्विच्युतांशैस्तु योजनम्॥**[259]

प्रश्नलग्नात् केन्द्रस्थित (१, ४, ७, १०) बलयुक्त ग्रहानुसारेण नष्टवित्तं वा चोरितवस्तुनः दिशाज्ञानं जायेत। अर्थात् केन्द्रे सूर्यश्चेत् चोरितवस्तुनः पूर्वादिक् शुक्रश्चेत् आग्नेयी, कुजश्चेत् दक्षिणा, राहुः चेत् नैरुती, शनिश्चेत् पश्चिमा, चन्द्रश्चेत् वायव्या, बुधश्चेत् उत्तरा तथा गुरुःयदि ईशानकोणमिति मन्तव्यम्। तथैव दैवज्ञवल्लभायाम् एवं कथितमस्ति यथा—

**ग्रहैर्दिशः केन्द्रगतैर्विचिन्त्या विलग्नराशेस्तदसम्भवे वा।**
**विलग्नमध्याच्चलितैर्नवांशैर्विचिन्तनीयानि हि योजनानि॥**[260]

---

[258](प्रश्नचण्डेश्वरः.४.५)

[259](प्रश्नभूषणम्.१२.५)

[260](दैवज्ञवल्लभा.९.९)

केन्द्रे स्थितग्रहात् दिक् वक्तव्या। अत्र न सम्भवश्चेत् लग्नस्य राशितः दिशा ज्ञातव्या अर्थात् लग्ने मेषः सिंहो वा धुनराशौ चेत् पूर्वदिशायां, वृषभ–कन्या वा मकरे चेत् दक्षिणदिक् मिथुन-तुला वा कुम्भश्चेत् पश्चिमदिक्, कर्क–वृश्चिक वा मीनश्चेत् तस्करितधनं उत्तरदिशियां लभ्यते।

प्रश्नशिरोमणिग्रन्थे एवं कथितमस्ति यथा – यदि चरराशिगतचन्द्रश्चेत् जले गम्यमानवस्तु, स्थिरराशिगतश्चेत् पृथिव्यां, द्विस्वभावगतराशिश्चेत् तिर्यग्स्थानस्य वस्तु वक्तव्यम्। अथवा उच्चगतचन्द्रश्चेत् किमपि उन्नतमञ्चे स्थापितमिति मन्यन्ते अथवा हृष्टेः अनुमानकथनात् करणीयः यथा-

यदा दैवज्ञस्य दृष्ट्या प्रश्नकर्ता अथवा दूतः आकाशं पश्यन् प्रश्नं करेति सति नष्टं वस्तु गृहस्य उपरितले, वृक्षस्य उपरि अथवा उन्नतस्थाने अस्तीति वक्तव्यम्। यदि प्रश्नकरणसमये प्रश्नकर्तुः दृष्टिः अधोभागे भूमिगता चेत् तदा तस्य वस्तुनः सम्भावना भूमेः अधोभागे, वापीस्थाने अस्तीति सम्भाव्यम्। अथवा तत् वस्तु भूमौ स्थापितमिति वक्तव्यम्। यदि प्रष्टुः दृष्टिकोणे भवेत् अथवा कोणादागत्य (ईशान्य, आग्नेय, नैरूति, वायव्य) प्रविश्य प्रश्नकरणे सति तत् वस्तु कोणे अस्तीति बोद्धव्यम्। प्रश्नकर्ता यं देशं पश्यन् प्रश्नं करोति अथवा यस्मात् देशात् प्रविशेत्, वस्त्वपि तस्यां दिशायामेव सम्भाव्यते।[261] विषयमिदं पण्डितरुद्रमणिरप्यङ्गीकरोति। विषयमिदं मूकमुष्टिप्रश्नस्य द्वितीयश्लोके उक्तपूर्वमेव।

---

[261](केरलप्रश्नशास्त्रसंग्रहः-पृ.७७)

पण्डितरुद्रमणेः कथनानुसारेण दृश्यते यत् यदा चोरस्य ग्रहः राशिं त्यक्त्वा अन्यराशिं गच्छति तदैव चोरः स्वपुरात् निष्क्राम्यति तथैव तस्य मार्गं नवांशादुच्यते। लग्नेशः वक्री भूत्वा यस्मिन् समये राशिं त्यजेत् तस्मिन्नेव समये चोरः स्वपुरं त्यक्त्वा निर्गच्छेत्। यदि शनिः सप्तमभावे स्थितः चोरः पतितो, पीडितो वा स्यात्। यदि सप्तमभावः स्थिरराशिगतः चेत् स चोरः दीर्घकालात् रुग्णः स्यात्। यदि अष्टमेशः सप्तमभावे चेत् चोरः म्रियतेति वक्तव्यः।

**यदा सप्तपतिः सिंहे चौर एको यदा झषे।**
**मिथुने च तदा चौरा बहवोऽथ स्थिरर्क्षगे॥**[262]

अर्थात् सप्तमेशः सिंहराशिगतश्चेत् चोरः एकः, तथैव मीन वा मिथुनगतश्चेत् चोराः अधिकसङ्ख्याकाः भवेयुः। स्वल्पसन्तानं स्थिरराशेः (सिंह) उपरि सप्तमेशश्चेत् चोरः एकः तथैव बहुसन्तानवान् द्विस्वभावराशि (मिथुन, मीन) गतश्चेत् चोराः अधिकाः भवेयुः। यदि चरराशेरुपरि सप्तमेशे स्थिते सति चोरः ग्रामान्तरं गच्छेत्, सैव स्थिरराशेरुपरि स्थितः चेत् देशे भवेत्। तथैव द्विस्वभावराशेरूपरि स्थितश्चेत् चोरः मार्गे भवति। यदि सप्तमेशः स्त्रीग्रहश्च सप्तमगृहे स्थितौ तथैव स्त्रीग्रहैः दृष्टस्तर्हि स्त्री चौर्यं करोति। तथैव बुधशुक्रश्चेत् गर्भवती स्त्री तस्करा भवेत्। बृहस्पतिश्चेत् अधिकवयस्कास्त्री, शनिश्चेत् वृद्धास्त्री, शनिः उदितश्चेत् अतिवृद्धास्त्री, कुजश्चेत् मध्यमावस्थास्त्री भवेत्। परन्तु चन्द्रे लग्ने स्थिते सति विशेषफलं कदापि न सम्प्राप्यते।

---

[262](प्रश्नशिरोमणिः.२.चौर्यधनचौरयोः.स्थानादि लाभप्रश्नः.३३)

अस्मिन् विषये आचार्यवराहमिहिरस्य मतमेवं वर्तते यथा चन्द्र-कुज-बुध-गुरु-सूर्य-शनिग्रहाणामायुः क्रमशः स्तनपान-बाल्य-ब्रह्मचारी-युवा-प्रौढा-वृद्धा-अतिवृद्धा च इति भवति।[263]

प्रश्नशिरोमणिग्रन्थे एवं कथितमस्ति यत् – लग्नस्य नवांशात् मूकप्रश्नसमानवस्तुनः संज्ञा वक्तव्या तथैव लग्ने तथा लग्नेशे यः बली, तस्मात् वस्तुनः वर्णः ज्ञेयः। यदि लग्नेशः निर्बलश्चेत् वस्तुनः सुषिरता (छिद्रादि) तथैव लग्नेशः पूर्णबलवान् चेत् बहिस्थात् वस्तु सारयुक्तं भवति। यदि लग्नेशः केनापि ग्रहेण पराजितो वा अस्तङ्गतो वा नीचगतस्तर्हि वस्तुनः कठोरता ज्ञेया। लग्नस्य नवांशाधिपतेः नियमानुसारेण वस्तुनः कोणसङ्ख्या तथैव लग्नस्य नवांशगतराशितः वस्तुनः लघुत्वं, मध्यत्वं, दीर्घत्वं, समानत्वं च उच्यते। तथैव लग्नस्य द्रेष्काणात् चोरः, लग्नस्य राशितः चोरस्य देशदिशौ तथैव लग्नेशात् चोरस्य अवस्था-जाति-गुणञ्च कथ्यते। एतस्मिन् विषये रावणसंहितायाम् एवमुक्तमस्ति यथा -

**अंशकाज्ज्ञायते द्रव्यं द्रेष्काणैस्तस्कराः स्मृताः।**
**राशिभ्यः कालदिग्देशा वयो जातिश्च लग्नपात्॥**[264]

नवमांशात् द्रव्य, द्रेष्काणात् चोर, राशितः समय, दिशा, स्थानं, लग्नेशात् चोरस्य आयुः एवं जातिविचारं कुर्वन् निर्णयं कुर्यात्।

---

[263]वयांसि तेषां स्तनपानबाल्यव्रतस्थिता यौवनमध्यवृद्धाः।
अतीव वृद्धा इति चन्द्रभौमज्ञशुक्रजीवार्कशनैश्चराणाम्॥ (दैवज्ञवल्लभा.९.५)
[264](रावण संहिता.६.८ कल्पः-पृ.सं.११४१)

एतदनन्तरं प्रश्नशिरोमणिग्रन्थे प्रत्येकराशिगत- प्रत्येकद्रेष्काणात् चोरस्य विचारः अतिविस्तारतया चर्चितः वर्तते। यथा मेषस्य प्रथमद्रेष्काणे भयानकशतृधारी–रक्तवर्णनेत्रवान् पुरुषः भवति। द्वितीयद्रेष्काणे अश्वसदृशोदरः-दीर्घमुखी-रक्तवस्त्रधारी स्त्री भवति। तृतीयद्रेष्काणे कपिलवर्ण-दण्डधारी-रक्तवस्त्रधारी पुरुषः भवति। एतादृशरीत्या चोरस्य विषयः सम्यगवगम्यते।

मेषराशौ मेषस्य स्थापनप्रदेशः, वृषभे गवां स्थापनप्रदेशः, मिथुने स्मशानं, मृगाणां तथैव गीयमानभूमिः, कर्के जलसमीपप्रदेशः, सिंहे वनं, कन्यायां नौका, तुलायाम् आपणः, वृश्चिके रन्ध्राभ्यान्तरप्रदेशः धनुराशौ गुडशाला, मकरे जलसमीपपृथिव्याम् अथवा धीवरादिगृहं, कुम्भे कुम्भकाराणांगृहम् अथवा कुम्भं, जलसमीपं, मीने जलं वा जलाशयादिके भवेत्। प्रश्नशिरोमणिस्थ विषयः अन्यग्रन्थेष्वपि एवमेव उपलभ्यते।

**नामबन्धः -**

एषो अध्यायः प्रश्नशिरोमणिसम्बन्धित एव न अपि तु ज्योतिषशास्त्रस्य सर्वाधिक- महत्वपूर्णोऽध्यायः भवति। किमर्थमिति चेत् अत्र चोरस्य नाम अपि ज्ञातुं शक्यते। अत्र चोरस्य नाम्नि कति अक्षराणि भवन्ति, मात्राः भवन्ति इत्यादिविशेषाः अत्यन्तमहत्वपूर्णाःअवगम्यन्ते। केचन दैवज्ञः एव स्वग्रन्थेषु विषयस्यास्य उल्लेखम् अकुर्वन्। तादृशेषु अन्यतमः पण्डितरुद्रमणिः। तेषामभिप्रायानुसारेण - लग्ने चरराशिगतनवांशश्चेत् नाम्नः अक्षरद्वयं, स्थिरराशिगतनवांशे चेत् अक्षरत्रयं, द्विस्वभावराशिगतश्चेत् नामाक्षरयुग्मं अथवा दलक्रमात् नाम्नः पञ्च, त्रीणी, अक्षराणि इति ज्ञेयम्।

**ओजश्र्क्षेतनुगे त्रिपेचकनगा वर्णा दृकाणक्रमात्**
**युग्मे व्द्यब्धिरसाश्च तेऽपि बलिसद्दृष्टा व्रजेयुश्चयम्।**
**तत्रोजेः विषमाः समाश्च समभे यद्वा स्ववर्गान्विते,**
**लग्ने स्वेशदृशैकवर्ण इति नाम्नो मात्रिकान्त्यो भवेत्॥**[265]

अर्थात् विषमलग्नश्चेत् द्रेष्काणक्रमात् ३, ५, ७ वर्णाः, समलग्नश्चेत् द्रेष्काणक्रमात् २, ४, ६ वर्णाः नाम्नि ज्ञेयाः।यदि उक्तद्रेष्काणः बली शुभग्रहैः दृष्टश्चेत् उक्तवर्णं बहुलतां प्राप्नोति। किन्तु विषमराशौ विषम तथा समराशौ समवर्णाः अधिकं भवन्ति। अथवा स्ववर्गयुक्तलग्नस्योपरि धनाधिपतेः दृष्टिश्चेत् मात्रा भवति। अन्तिमे यस्य एतादृशनामाक्षरं भवति। यथा - अवर्गस्य ईशः सूर्यः तथैव कवर्गचवर्गयोः स्वामी कुज-शुक्र-बुध-बृहस्पति-शनैश्चराः क्रमेण भवन्ति। तथैव यरलवात् आरभ्य क्षकारपर्यन्तं चन्द्रः ईशो भवति। लग्न-चतुर्थ-सप्तम दशमगृहाणां नवांशात् अक्षरक्रमात् योजनेन नामवर्णः समुपलभ्यते तथैव यस्य नाम्नः बहूनि अक्षराणि भवन्ति चेदपि एतस्यैव नवांशस्य वर्णाः भवन्ति।

केन्द्रस्य नवांशराशौ पापग्रहः स्थितश्चेत् तस्य नवांशवर्णं हरति तथैव केन्द्रांशराशौ शुभग्रहः, शुभग्रहेण दृष्टश्चेत् स्वनवांशतुल्यवर्णं ददाति। यदि अक्षरदातृग्रहः स्वोच्चराशिगतश्चेत् स्वराश्यक्षरान् द्विगुणं करोति। विषमराशिश्चेत् विषम तथा समराशिश्चेत् समाक्षरान् द्वित्वं करोति। यदि अक्षरदाता ग्रहः स्वोच्चराशिगतो वा स्वराशिगत तदा केन्द्रस्य पञ्चमनवांशं पश्यति

---

[265](प्रश्नशिरोमणिः.२.नामबन्धः.३)

तर्हि तेषाम्मध्ये स्थित्वा अक्षरं ददाति। अधिकाक्षाराणि चेत् आदौ संयोगः, कानिचन चेत् अन्तिमे संयोगो वक्तव्यः।

**मात्रानिश्चयः -**

बलवान् शुभग्रहः केन्द्रे वा त्रिकोणे शीर्षोदयराशिगतश्चेत् अक्षरस्य शिरसि मात्रा भवति। तथैव पृष्ठोदयराशिगतश्चेत् शिरोधमात्रा भवेत्। उभयोदयराशिगतश्चेत् अक्षरपार्श्वे मात्रा भवेत्। शीर्षोदयमात्राः ए, ओ, अं, पृष्टोदयमात्राः उ, ऊ उभयोदयमात्राः अ, इ च एषः लघुः भवति। एतेषां सवर्णदीर्घमात्रा वक्तव्या।

**ओजो दृकाणे विषमाः समे च समाः स्युरिष्टो यदि दीर्घराशौ।**
**दीर्घाऽन्यथान्या च खलास्त्रिकोणे मात्रासरा भांशपतौ बलोने॥**[266]

विषमद्रेष्काणश्चेत् विषमः, समद्रेष्काणश्चेत् सममात्रा भवति। दीर्घराशिगतश्चेत् दीर्घमात्रा, ह्रस्वराशिगतश्चेत् ह्रस्वमात्रा भवति। पापग्रहे त्रिकोणे स्थिते मात्रायाः हरणं जायते। तथैव नवांशेशः निर्बलो भूत्वा नवांशे स्थिते तर्हि मात्रानाशः एव। उच्चाधिपतिः नवांशधिपतिग्रहेण दृष्टश्चेत् मात्रानाशः नैव सम्पद्यते। यदि नवांशाधिपतिः हीनवीर्यो भूत्वा स्वक्षेत्रे स्थितः तथैव बलयुक्तौः चतुर्थभावे स्थितस्तर्हि एं, दशमे चेत् अनुस्वारः, सप्तमे चेत् विसर्गः देयः। मकरादारभ्य षड्राशिश्चेत् लघुः शेषाद्दीर्घमात्रा नामबन्धे योजनीया।

---

[266](प्रश्नशिरोमणिः.२.मात्रानिश्चयः.९)

**वर्षाप्रश्नः -**

अन्नादेव प्रजाः सम्भवन्ति। ये केऽपि नराः पृथिवीमाश्रित्य जीवन्ति ते सर्वे अन्नादेव उद्भूताः

भवन्ति। अनैव जीवाः जीवरूपेण तिष्ठन्ति अन्तेऽपि तस्मिन्नेव लीयन्ते। अन्नमेव प्राणिनां ज्येष्ठं भवति। अनेनैव अन्नं सर्वोषधमिति मन्यते।[267]वृष्टिं विना अन्नस्य सम्भव एव न स्यात्। जीवनस्य आधारः अन्नमेव तथैव अन्नस्य आधारः वर्षा इति। कृषिकाराः स्वलाभाय वृष्टिप्रश्नस्य विचारं कुर्वन्ति। प्रश्नवैष्णवग्रन्थे एवं कथितमस्ति। यथा -

**सहस्ररश्मेः मिथुनप्रवेशः शशाङ्कवाचस्पतिशुक्रसौम्याः।**
**मीने च कन्यामिथुनस्थिताः स्युः तदा तु वृष्टिः सकलान्नकर्त्री॥**[268]

अर्थात् यदा सूर्यस्य मिथुनराशौ प्रवेशः भवेत् तदा चन्द्र–गुरु–शुक्र–बुधनां ग्रहाणां एकत्र अथवा पृथक् पृथक् मिथुन–कन्या–मीनराशिषु स्थितिश्चेत् सर्वप्रकारकान्नोत्पादनरूपः वृष्टिः सम्भवेत्।

पण्डितरुद्रमणेः अभिप्रायानुसारेण अस्मिन् योगे केवलं मिथुन–कन्या–मीनः एव न परन्तु धनुरपि स्वीकरणीयः। अस्मिन् विषये एवं कथितं वर्तते यथा मिथुनञ्च सूर्यसङ्क्रान्तौ शुक्र–बुध–वृषभ–कर्काश्चेत् ,चन्द्रे मीने स्थिते अथवा विलोमकारणेन सुवृष्टिः जायते।

---

[267](तैत्तिरीयोपनिषद्.१.२.१)

[268](प्रश्नवैष्णवः.१०-२५)

**चक्रम्-५.१**

| चन्द्रः | | शुक्रः | सूर्यः |
|---|---|---|---|
| | सुवृष्टियोगः | | बुधः |
| | | | |
| | | | बृहस्पतिः |

यदि मिथुनसङ्क्रान्तौ वृषभ तथा कर्कस्य कुजः, शनैश्चरश्चेत् , द्विस्वभावराशौ राहुस्तर्हि अल्पवृष्टः। यदि शुक्रबुधौ मिथुनराशौ स्थितौ, मेषराशौ चन्द्रस्तथा बृहस्पतिश्च द्वितीयभावे स्थितः, पापग्रहः तुलावृश्चिकसिंहगतस्तर्हि वृष्टिः समर्थः भवेत्।

**वृश्चिकवृषकर्कटकाः सप्तममृगमत्स्यकुम्भधाराः।**
**सजला राशय एते शेषा अजलाः समाख्याताः॥**[269]

अर्थात् वृषभ-कर्क-तुला-वृश्चिक-मकरस्य उत्तरार्धं कुम्भ-मीनौच एते राशयः जलचराः भवन्ति। शेषराशयः मेष-मिथुन-सिंह-कन्या-धनुः मकरस्य पूर्वार्धम् एते सर्वे शुष्क नाम निर्जलराशयः भवन्ति। मतमेतद् दैवज्ञबादरायणस्य भवति परन्तु श्रीवैद्यनाथः एवं कथयति यथा –

कर्क-वृश्चिक-मकर-मीन जलराशयः, वृषभ-मिथुन-कन्या वा कुम्भः जलाश्रितराशयः तथैव मेष-सिंह-तुला वा धनुः निर्जलराशयः

[269](प्रश्नविद्या.४.३९)

इति।[270] परन्त्वत्र बादरायणमतमेव स्वीकरणीयम्। बादरायणस्य अनुमोदनं प्रश्नमार्गेऽपि कृतं वर्तते।[271]

एतत् विषयाधारेणैव पण्डितरुद्रमणिरपि योगममुं कथयति – पूर्णचन्द्रः शुभग्रहेण दृष्टो वा युक्तश्चेत् केन्द्रे (१, ४, ७, १०) जलराशिगतश्चेत् शीघ्ररूपेण वृष्टिः स्यात्। एवं प्रकारेण चन्द्रात् वा लग्नात् त्रिकोणे (९, ५) यदा शुक्रः गच्छति तस्मिन्नेव समये वर्षा भवेत्। यतः चन्द्रशुक्रौ जलाश्रितग्रहौ भवतः। सूर्य-कुज-शनिग्रहाः निर्जलाः भवन्ति। गुरुर्वा बुधः यदि जलचरराशौ अथवा बलीयग्रहेण सह स्थितः सजलम् अन्यथा निर्जलं स्यात्।

**शुष्काः कुजरविसौरा भृगुचन्द्रमसौ जलाश्रियौ ज्ञेयौ।**
**आश्रयतो गुरुसौम्यौ ग्रहास्तु शेषा यथा प्रोक्ताः॥**[272]

प्रश्नशिरोमणिग्रन्थे एवं कथितमस्ति यथा पूर्णमासी पूर्वाषाढयुक्तश्चेत् समर्घः, उत्तराषाढयुक्तश्चेत् अश्वपीडा, रोमकरणशील मूलानक्षत्रञ्चेत् महादुर्भिक्षञ्च वक्तव्यम्। ज्येष्ठस्य कृष्णप्रतिपदा भानुवासरश्चेत् वृक्षाणां नाशकरणरतः महाप्रचण्डपवनः सम्भवेत्। कुजवासरश्चेत् अतिवृष्टि, बुधवासरश्चेत् महादुर्भिक्षं तथैव वृष्टिक्षयञ्च भवेत्। शनिवासरश्चेत् जलस्य दुर्लभता,

---

[270]मीनालिकर्कटमृगाः सलिलाभिधानास्तोयाश्रया घटवधूयुगगोपसंज्ञाः।
निस्तोयमूतलचराः क्रियचापतौलिकण्ठीवाश्च बहवः प्रवदन्ति सन्तः॥
(जातकपारिजातम्.१.१५)

[271](प्रश्नमार्गः.२५.९०)

[272](प्रश्नविद्या.४-४०)

अन्यवासरश्चेत् (सोम, गुरु, शुक्र) फल-धन-धान्य-सन्तानोत्पत्तिः तथा गृहे गृहे महोत्सवः एव।

पौषमासस्य सङ्क्रान्तिदिने रविवासरश्चेत् धान्यस्य मूल्यं द्विगुणं, कुजवासरश्चेत् चतुर्गुणं, शनिवासरश्चेत् त्रिगुणं, बुधो वा शुक्रवासरश्चेत् धान्यस्य मूल्यं चतुर्थभागं न्यूनं भवेत्। बृहस्पतिर्वा सोमवासरश्चेत् अर्धमूल्यं भवेत्। शुभग्रहे जलचरराशौ द्वितीयभावे स्थिते तथैव शुक्लपक्षे लग्नगत जलचरराशिगतः चन्द्रश्चेत् वृष्टिः सम्भवेत्। यदि सूर्यः चन्द्रश्च सप्तमे, चतुर्थे ,वा अष्टमभावेषु स्थितास्तथा शुक्रशनि लग्नात् द्वितीये तृतीये चेत् अधिकवर्षं सम्भाव्यते।आचार्य वराहमिहिरस्य कथनानुसारेण – एतत् केवलं वर्षर्तु समये एव वर्षं भवेत्। पुनरेवमप्यकथयत् -

यदि चन्द्रात् सूर्यात् च सप्तमस्थाने क्रमशः शनिःच शुक्रस्तर्हि अथवा लग्नात् चतुर्थे अष्टमस्थाने च स्थिते तथैव तौ लग्नात् द्वितीये च तृतीयस्थाने स्थिते वर्षर्तौ शीघ्रमेव वर्षं सम्भवेत्।[273]

प्रश्नशिरोमणिग्रन्थानुसारेण मीनस्य सङ्क्रान्तिसमये रविवासरश्चेत् पवनाधिक्यता वर्तते। कुजवासरश्चेत् पशुपीडा, शनिवासरश्चेत् दुर्भिक्षं, बुधवासरश्चेत् महामारी, यदि सङ्क्रान्ति दिवसे शुभवासरश्चेत् शुभफलं तथा अशुभवासरश्चेत् कष्टदायकञ्च

---

[273]चन्द्रार्कयोः शनिसितौ यदि सप्तमस्थौ तुर्येऽष्टमे च भवतो यदि वा विलग्नात्।
स्यातां धने च सहजे यदि तौ विलग्ना द्वर्षासु वर्षणमचिरेण तदा विधत्तः॥
(दैवज्ञवल्लभा.११.१)

भवेत्। शुक्रबृहस्पत्योः अस्तश्चेत् तथैव सर्वे शुभग्रहाः जलचरराशिगताः चेत् सम्यक् वृष्टिः स्यात्।यदि चतुर्थभावे शुभग्रहे स्थिते अधिकवृष्टिः, पापग्रहः चेत् दुर्भिक्षभयं जायते। तौ शुभग्रहौ चेत् सर्वदा वृष्टिः, त्रयः शुभग्रहाः चेत् निरन्तरदीर्घवृष्टिः सञ्जायते। प्रश्नज्ञानप्रदीपग्रन्थेऽपि एवं दृश्यते यथा – लग्नात् चतुर्थभावे शुक्रश्चेत् तस्मिन्नेव दिने अधिकं वर्षेत्।[274] प्रश्नमार्गे एवं दृश्यते यथा –

**हिबुकेनाधस्सलिलं मद्यागमनं तु सप्तमेनैव।**
**दशमेन वृष्टिपतनं केन्द्रविशेषास्तयोः ह्येते॥**[275]

१.चतुर्थभावात् भूगर्भस्थजलविचारः करणीयः।

२. सप्तमभावात् नदीस्थजलविचारः करणीयः।

३. दशमभावात् वर्षविचारः करणीयः।

४. लग्नात् सामान्यजलविचारः करणीयः।

पण्डितरुद्रमणेः कथनानुसारेण यदि सर्वे ग्रहाः चरलग्ने स्थिताः अर्धाधिकदिनपर्यन्तं वृष्टिः सम्भवेत्। यदि लग्ने पापग्रहः शनैश्चरेण दृष्टस्तर्हि तस्याः दिशायाः क्षेत्रस्य नाशकरणशीलः तथैव लग्ने कुजः, सूर्यश्चेत् तस्या दिशायाः सस्यसम्पत् नष्टा भवेत्। यदि लग्ने शुभग्रहः मित्रग्रहेण दृष्टश्चेत् धान्यमतिसमृद्धितया उत्पद्यते।

[274](प्रश्नज्ञानप्रदीप.२८.३)

[275](प्रश्नमार्गः.२५.८९)

यदि कुजसूर्यौ तथा चन्द्रश्च जलराशिवर्जिते लग्ने बलवान् भवति तर्हि दुर्भिक्षं तथा पीडा च भवेत्।

**दुर्भिक्षपीडे तु शनेर्नवाम्बुकोशे सुदृष्टो विधुरम्बुदः स्यात्।**
**यदीन्द्रवाद्यादि परिस्पृशंस्तु जलेषु तिष्ठेत् सलिलोद्यतश्च॥**[276]

नवमे,चतुर्थे द्वितीयभावे च चन्द्रः शुभग्रहैः दृष्टश्चेत् जलदायकः भवेत्। यदि इन्द्रधनुषं स्पृशति, जले तिष्ठति, जलादाने उद्युक्तो भवति तादृशपुरुषेण जलस्य प्रश्नः क्रियते चेत् जलस्य वृष्टिः स्यात्। यदि इन्द्रधनुः, श्याममेघयुक्तसन्ध्या, नवीनमेघाश्चेत् जलस्य सम्यग् वृष्टिः सम्पद्यते। पूर्व-पश्चिम-उत्तर-ईशानदिक्षु तडित् भवति चेत् शीघ्रमेव नितान्तं वृष्टिः स्यात्। एवं प्रकारेण वायव्यदिश्यपि ज्ञेयम्। शेषदिक्षु तडित् प्रकाश्यते चेत् वर्षः भवेत्।

**पौषशुक्लत्रयोदश्याङ्करः सौरिः कुजस्तथा।**
**धनैर्नमुच्यते तोयङ्गोधूमाद्यस्यसङ्ग्रहः॥**[277]

पौषमासस्य शुक्लपक्षत्रयोदशीदिने यो शनिवासरो अथवा कुजवासरो भवेत् चेत् मेघैः न वर्ष्यते तथा गोधूमादि अन्नसङ्ग्रहः करणीयः। मासेऽस्मिन् पक्षादारभ्य यस्यां तिथिगतरात्रौ वा दिने घनमेघाः स्निग्धाः आकाशे स्थिताःतर्हि श्रावणशुक्लपक्षादारभ्य तस्यां तिथौ वर्षर्तौ पौषमेघसमानवृष्टिः जायतेति प्रश्नशिरोमणिः कथयति।

---

[276](प्रश्नशिरोमणिः.२.वर्षाप्रश्नः.८)

[277](अर्घप्रकाश ज्योतिष.४.३४)

यदि कार्तिकैकादश्यां मेघाः दृश्यते तर्हि आषाढे वृष्टिः सम्भाव्यते। तथैव मार्गशीर्षाष्टम्यां तडित् चेत् श्रवणे वृष्टिः सञ्जायते। पौषकृष्णपक्षे वर्षं चेत् भाद्रपदे सम्यक् वृष्टिः स्यात्। माघसप्तम्यां वर्षः चेत् ज्येष्ठामुलयोः वृष्टिः न सम्भाव्यते। मघानक्षत्रेषु पृथ्वी अन्नात्पूरितो भवेत्। श्रावणप्रथमपक्षस्य पञ्चमीदिने वृष्टिश्चेत् अतिवृष्टिः कृषिकारंपीडयति। केन्द्रे (१, ४, ७, १०) शुभग्रहस्तथा केन्द्रस्वामी न भवति किन्तु तयोः पापग्रहदृष्टिः चेत्, वृषभ-सिंह-तुलालग्नं चेत् धान्याय शलभ–कीट–मूषिकादि भयं भाव्यते। कुम्भ–वृश्चिक -वृषभमेषाश्चेत् पवन-अग्नितः भयं जायते। कन्या–मिथुन–धनुश्चेत् शलभादि कीटकैः भयं जायते। विषयेस्मिन् प्रश्नज्ञानप्रदीपे एवं कथितं वर्तते यथा –

**वृष्टिर्नास्तीति कथयेदथवा चण्डमारुतः।**
**पापः सौम्यविमिश्राश्चेदल्पवृष्टिर्भविष्यति॥**[278]

केन्द्रे शनि-कुज-राहु-बुधाश्चेत् जलवृष्टिः नैव भवेत् अधिकपवनेऽपि स्यात्। पापग्रहः शुभग्रहैस्सह सङ्गतः तर्हि किञ्चित् वृष्टिः सम्भाव्यते। कर्कस्य कुजश्चेत् जलं भवेत्। तथैव चन्द्रेण दृष्टः चेत् रोगसहितजलवृष्टिः भवेत् इति प्रश्नशिरोमणिग्रन्थे वर्षाप्रश्ने कथितं वर्तते।

**भोजनप्रश्नः -**

यदि काऽपि व्यक्तिः भुक्तः अथवा भोजनं कथं स्यात् इत्याद्येवं प्रकारेण भोजनसम्बन्धप्रश्नाः भोजनप्रश्नाः इति

[278](प्रश्नज्ञानप्रदीप.२८.७)

कथ्यन्ते। एतस्मिन् विषये प्रश्नमार्गे एवमुक्तमस्ति यथा – लग्नं भोजनकरणशीलस्य शरीरद्योतकः। अतः लग्नात् भोजकः शरीरविचारं कुर्यात्। लग्ने स्थितशुभाशुभग्रहाणामनुसारेण भोजनकर्तुः शरीरस्वास्थ्यं वक्तव्यम्। लग्नाधिपतितः अभिमुखता (भोजनकर्तुः मुखं कस्यां दिशायामपि) तथा भोजनस्थलरमणीयता, अरमणीयता, आसनादि विचाराः करणीयाः।[279]

परन्तु पण्डितरुद्रमणि कथयति यत् लग्नेशः अन्नदाता, दशमेशः भोजनकर्ता, सप्तमेशात् अन्नं वक्तव्यम्। अस्मिन् प्रश्ने शुभग्रहस्य योगः तथा दृष्टिः चेत् शुभफलं तथैव पापग्रहेण अशुभफलं वक्तव्यम्। लग्नचतुर्थभावौ शुभग्रहयुक्तौ वा दृष्टै चेत् सुन्दरं भोजनं। लग्ने बृहस्पतिर्वा शुक्रश्चेत् कुसमये सुष्टु भोजनं इति अवधेयम्।

**पश्यति यस्तत्काले लग्नगतस्य ग्रहस्य यः प्रोक्तः।**
**स रसः प्रष्टुर्वाच्यो भोजनकाले त्वयं क्रमादपरः॥**[280]

प्रश्नकाले यो ग्रहः बलवान् केन्द्रे अथवा यो ग्रहः लग्नं पश्यति अथवा, लग्ने स्थितश्चेत् प्रश्नकर्तुः भोजने तादृशप्रकारकरसास्वादनं भवेत्। परन्तु पण्डितरुद्रमणेः मतानुसारेण - यो ग्रहः लग्नं पश्यति चेत् तस्यैव ग्रहस्य रसः भोजने वक्तव्यः। शुभराशिस्थ ग्रहाणाम् आधारेण सुरस तथा अशुभराशिस्थ ग्रहाणाम् आधारेण नीरसभोजनमिति कथ्यन्ते। यदि लग्नं वीक्ष्यमाण ग्रहः

---

[279](प्रश्नमार्गः.२७.१)

[280](आर्य्यासप्ततिः.३६)

वक्री चेत् रससहितमपि भोजनं नैव कुर्यात्। यदा लग्ने कस्यापि ग्रहस्य दृष्टि न चेत् केन्द्रे स्थित ग्रहस्य रसः वक्तव्यः। **कटुकलवणतिक्तमिश्रिता मधुराम्लौ च कषाय इत्यपि।**[281] अत्र सूर्यादि ग्रहाणां रसः बृहज्जातके वर्णितः वर्तते। मतान्तरेण प्रश्नशिरोमणिग्रन्थे एवमुक्तमस्ति यत् – यदि केन्द्रे (१, ४, ७, १०) सूर्ये स्थिते गोधूम-गुड-अन्नादि, चन्द्रश्चेत् श्रेष्ठान्न-दधि-घृतं-श्वेतान्नं, कुजश्चेत् गुडरक्तान्ने, बुधश्चेत् दुग्धंकर्पूरयुक्तान्नं, च बृहस्पतिश्चेत् हरिद्रा-दधि, शुक्रश्चेत् मृदु-घृतान्नं, शनिश्चेत् तैलं, तिलादिकं, राहुश्चेत् दुर्गन्धयुक्तं, अपवित्रं माशादि केतुश्चेत् अधिकपदार्थयुक्तभोजनं लभ्यते।

अधुना चतुर्थभावगतग्रहस्य वशात् भोजनस्य रसः उच्यते। यथा सूर्ये चतुर्थभावे स्थिते मृद्वन्नं, शनिश्चेत् तैलमिश्रितान्नं, नीचराशिगतश्चेत् नीरसं, किञ्चिदपक्वान्नं, तथा कदन्नभोजनं वक्तव्यम्।

**सूर्यादिभिर्ललग्नगतैः सवीर्यैराजादिगेहे भुजिमामनन्ति।**
**सुखे सुखेशे सबले सुभोज्यं चरादिकं स्यादसकृत्सकृद्ध्दि॥**[282]

सूर्यादिग्रहाणां बलवान् लग्नगतस्थित्याधारेण राजगृहे भोजनं लभ्यते। चतुर्थस्थाने वा चतुर्थेशस्य बलशालित्वकारणेन सुन्दरं, सुखभोजनं, चतुर्थे स्थिरराशिश्चेत् एकवारं, द्विस्वभावराशिश्चेत् द्विवारं, तथैव चरराशिगतश्चेत् अनेकवारं भोजनं लभ्यते।

---

[281](बृहज्जातकम्.२.१४)

[282](ताजीकनीलकण्ठी.मासदिन प्रवेश प्रकार.४२-पृ.सं.३५६)

एतैः विषयैः पण्डितरुद्रमणिः पूर्णसहमतिंन दर्शियति। तथैव ते एवमपि अकथयन् यथा – यदि चतुर्थेशः शुभग्रहेण दृष्टो वा युक्तश्चेत् सुष्टुभोजनं सुखेन लभ्यते। तथैव अस्मादन्यथा चेत् कस्मिन्नपि समये भोजनं नैव प्राप्यते। सूर्येण दृष्टो वा युक्तः शनैश्चरश्चेत् भोजनं नैव लभ्यते। किन्तु क्वचित् शस्त्रभयं सम्भाव्यते। यदि लग्नं सूर्येण दृष्टं वा युक्तं चेत् उपवास एव। रात्रौ कुभोजनं लभ्यते। यदि चन्द्रः दशमे उष्णभोजनं, कुजस्तर्हि शीतलभोजनं भवेत्।

**मूलत्रिकोणगः खेटो यद्गृहं च समाश्रितः।**
**तद्गृहेशस्य गेहे स्याद्भोजनं बलिनोऽथवा॥**[283]

मूलत्रिकोणे प्राप्तग्रहः यस्मिन् भावे स्थिते तस्यैव गृहस्वामिनः गृहे भोजनं कृतम्। अथवा अधिकबलवान् ग्रहस्य गृहे भोजनं कृतमिति मन्तव्यम्।

बलवान् तन्वादिभावश्चेत् क्रमेण अग्रलिखितमनुष्यद्वारा भोजनप्राप्तिर्जायते। निजगृहात्, कुटुम्बात्, भ्राता, पिता-मातृभ्यः, शतृभ्यः, बन्धुभ्यः, ऋणजनेभ्यः, याचकेभ्यः, राजभ्यः, स्वमित्रेभ्यः, तथा क्रयजनेभ्यः भोजनप्राप्तिः सम्भविष्यति।

रावणसंहितायां भोजनप्रश्नविषये द्वादशभावात् विचारणीयविषयाः एवं कथिताः –

**पूर्त्तिरमत्र भक्ष्यम्पेयम्भोजयितृभाव उपदेशः।**
**सेचनमन्नं सहभुक् पूर्त्तिकथा शयनमपि लग्नात्॥**[284]

---

[283](प्रश्नशिरोमणिः.२ भोजनप्रश्नः १२)

[284](रावण संहिता.प्रश्नतन्त्र.भोजनप्रश्नः-पृ.सं.१११७)

लग्नादि द्वादशभावैः व्यक्ति, पात्र, भक्ष्य, पेय, भोजनकर्ता, उपदेश, सेचन, अन्नेन सह भुञ्जानः, पूर्तिभोजनसमये वार्तालापः एवं विश्रामविचारः करणीयः।

**चक्रम्-५.२**

<table>
<tr><td>विश्रामः</td><td>व्यक्तिः</td><td>पात्रम्</td><td>भक्ष्यम्</td></tr>
<tr><td>समयः</td><td colspan="2" rowspan="2">भोजनप्रश्ने द्वादशभावविचारः</td><td>पेयम्</td></tr>
<tr><td>पूर्तिः</td><td>भोजनकर्ता</td></tr>
<tr><td>सहभुक्तः</td><td>अन्नम्</td><td>सेचनम्</td><td>उपदंशनम्</td></tr>
</table>

अथुना प्रश्नशिरोमणिग्रन्थे सूर्यादि क्रमात् अन्नज्ञानं ज्ञायते यथा – सूर्यात् तिल, चन्द्रात् तण्डुल, कुजात् मसूर-चण, बुधात् मुद्गा-राजमा, बृहस्पतितः गोधूम, शुक्रात् यव-बाजर, शनितः माषा, राहुतः घ्रासः तृणादि रूपेण अन्नमुत्पद्यते।

अन्यमते सूर्ये मूलं, चन्द्रे पुष्पं, कुजे पत्रं, बुधशुक्रबृहस्पतिषु शाखा, शनौ व्यञ्जनयुक्तः, राहुकेतौ मेषमांसं च भोजनमिति वक्तव्यम्। चन्द्रस्थितराश्यधिपतिः चन्द्रेण सह स्थितः, इष्टसमये मित्रेण सह रुचिकरभोजनं भुङ्क्ते तथैव अस्मात् योगात् विलोमश्चेत् अन्यथा फलमुच्यते। यदि क्षीणचन्द्रश्चेत् तथैव चन्द्रराशेः नवांशे पापग्रहे स्थिते इष्टसमये अन्नस्य प्राप्तिः नैव सिध्येत्।

यदि सूर्येण सह चन्द्रस्य इत्थसालं भवति तर्हि निर्मलतीक्ष्णभोजनं लभ्यते। बृहस्पतिना सह इत्थसालञ्चेत् स्वादुभोजनं, शुक्रेण सह चेत् बृहदन्नं लभ्यते। बुधश्चेत् महोत्सवे

स्वादुरसान्नं, कुजश्चेत् दुष्टस्थाने उष्णान्नं तथा शनिश्चेत् शस्त्रस्थाने भोजनं सम्पद्यते। यदि शुभग्रहस्य मित्रदृष्टिश्चेत् विवाहे भोजनं लभ्यते तथैव वैरदृष्टिश्चेत् विवाहादागतभोजनं भुज्यते।

**अवलोकनम्**

पञ्चमेऽध्याये षण्णवत्यधिकशतश्लोकाः विद्यतन्ते। तत्र तावत् आदितः चोरप्रश्नः,वर्षप्रश्नः, भोजनप्रश्नः इत्यादि विषयचर्चा भवति।प्रश्नशिरोमणिग्रन्थे चोरप्रश्नविषये विस्तारेण चर्चा दृश्यते। तत्रापि चोरस्य नामज्ञानपर्यन्तं ज्ञानं प्राप्यते। अत्र उदाहृताः विस्तृतविषयाः अन्येषु ग्रन्थेषु नोपलभ्यन्ते। एतादृशमहत्त्वपूर्णविषयगर्भोऽयं ग्रन्थः ज्योतिर्जगति विराजते।

## उपसंहारः

संस्कृतवाङ्मये सर्वदा ज्योतिषशास्त्रस्य प्रमुखस्थानं विद्यते। तत्रापि ज्योतिषशास्त्रे प्रधानग्रन्थः प्रश्नशिरोमणिरिति , मुख्याचार्येषु पण्डितरुद्रमणिः विशिष्ट इति च सर्वे अङ्गीकुर्वन्त्येव। अस्मिन् ग्रन्थे सङ्क्षेपाध्यायनामके प्रथमेऽध्याये युगपद्बहुप्रश्नविचारकरणसमये पण्डितरुद्रमणिः अन्यदैवज्ञानामपेक्षया किञ्चिदग्रे गत्वा विशेषरूपेण विभिन्नरीत्या च प्रत्यपादयत्।

विशेषाध्याय नामके द्वितीयेऽध्याये स्वप्नप्रश्नः विशेषतया वर्णितो वर्तते। कुत एवमिति चेत् अस्मिन् विषये क्वचिद्ग्रन्थेष्वेव विवरणं प्राप्यते। धनलाभप्रश्ने, निधिप्रश्ने, सन्ततिप्रश्ने, विवाहप्रश्ने च एते महोदयाः विशेषरूपेण सविस्तरं अवर्णयन्।

तृतीयेऽध्याये युद्धप्रश्नः, दुर्गभङ्गप्रश्नः, यात्रादिप्रश्नाः सविस्तरं चर्चिताः परन्तु रोगप्रश्नविषये सामान्यतया विवरणमदात्। तथैव आगमप्रश्नविषये लेखप्रश्नविषये च विशेषचर्चामकरोत्।

चतुर्थेऽध्याये उत्पातप्रश्नस्य विचारः कृतः। सामान्यतया अन्यग्रन्थेषु नोपलभ्यमानप्रश्नविवरणान्यपि अस्मिन् शोधप्रबन्धे द्रष्टुं शक्यते।

पञ्चमेऽध्याये अन्येषामदि प्रश्नानामपि सम्यक् विचार्यापि विशेषरूपेण चोरप्रश्नविषये प्रत्यपादयत्। अत्र चोरस्य नामज्ञानपर्यन्तं ज्ञानं संस्थापितं च वर्तते।

## अनुशीलितग्रन्थसूची

**अथर्ववेदीयज्यौतिषम्** – भ्रमभञ्जनी, चौखम्बा सुरभारती प्रकाशन, २००४.

**अमरकोषः** - अमरसिंहः , माहेश्वरी, चौखम्भा संस्कृत संस्थान,२०१४.

**अर्धप्रकाशज्योतिषम्** - पं श्री रविदत्त, खेमराज श्रीकृष्णदास, २००८.

**आर्य्यासप्ततिः** - भट्टोत्पलप्रणीता, श्रीवासुदेवगुप्ता, श्री अन्नपूर्णा प्रकाशक, २०१४.

**ईशादि नौ उपनिषद्** – शङ्कराचार्यः, गीताप्रेस, २०११.

**उडुदायप्रदीपः** - ज्योतिष्मती, ज्योतिषकर्मकाणड एवम् अध्यात्मशौधसंस्थान, २००७.

**उत्तरकालामृतम्** - कवि कालिदास, जगन्नाथ भसिन, रंजन् पब्लिकेशन्स, २०१०.

**कर्मविपाकसंहिता** - पं.शम्भुदत्तत्रिपाठी शास्त्री, सावीत्री ठाकुर प्रकाश, २००५.

**कश्यपजातकम्** -महर्षिकश्यप, अभया चौखम्भा कृष्णदास अकादमी, २०११.

**कामसूत्रम्** – श्रीवात्स्यायनः, जयमङ्गला, डा रामानन्द शर्मा,चौखम्बा कृष्णदास अकादमी, २०१६.

**कृषिपराशरः** – श्री द्वारकाप्रसादशास्त्री, चौखम्बा संस्कृतसीरीज आफिस, २००३.

**केरलीयज्योतिषम्** - श्री शुक्राचार्यः, डॉ.गौरीशंकर कपूर, रंजन् पब्लिकेशन्स, २०१२.

**गर्गमनोरमा** - श्री गर्गमुनिः, पं.श्री दीनानाथ झा, चौखम्बा संस्कृत सीरीज आफिस, २००२.

**छान्दोग्योपनिषद्** – शङ्कराचार्यः, गीताप्रेस, १९६३.

**जातकदीपिका** - डा.सुरकान्त झा, रुपेश ठाकुर प्रसाद प्रकाशन, २००९.
**जातकपारिजातम्** - श्री वैद्यनाथः, सुधाशालिनी, विमला चौखम्भासंस्कृत संस्थान, २००८.
**जातकाभरणम्** – श्रीढुण्ढिराज, विमला, चौखम्भा अमरभारती प्रकाशन, २००८.
**ज्यौतिषप्रशनफलगनना** - दयाशङ्कर उपाध्याय, विमला, चौखम्बा विद्याभवन, १९९८.
**ताजिकनीलकण्ठीयं** - नीलकण्ठदैवज्ञः, श्री विश्वनाथदैवज्ञ, मोतीलाल बनारसीदास, २०११.
**दैवज्ञवल्लभा** – वराहमिहिराचार्यः, डाँ.शुकदेव चतुर्वेदी, रंजन् पब्लिकेशन्स, २०१२.
**नष्टजातकम्** - मुकुन्ददैवज्ञपर्वतीय, डाँ.शुकदेवचतुर्वेदी, रंजन् पब्लिकेशन्स, २०१२.
**नारदसंहिता** - विमला चौखम्भा संस्कृतभवन, २०१५.
**पूर्वकालामृतम्** - कवि कालिदास, डाँ. सुरेशचन्दर मिश्र, रंजन् पब्लिकेशन्स, २००७.
**प्रश्नचण्डेश्वरः**- महर्षि अभयकात्यायनविष्णुपदी, शिवपदी, चौखम्बा सुरभारती प्रकाशन, २०१४.
**प्रश्नज्ञानम्** - आचार्या भट्टोत्पल, डाँ शुकदेव चतुर्वेदी, रंजन् पब्लिकेशन्स, २०१४.
**प्रश्नज्ञानप्रदीपम्** - महाराजाशंभुसिंह, सुठालियाधीशः, खेमराज श्रीकृष्णदास श्रीवेंकटेश्वर प्रेस, २००५
**प्रश्नभूषणम्** - जीवनाथ झा, आचार्या गुरुप्रसाद गौड़, प्रेक्षा – सौम्या चौखम्बा सुरभारती ग्रन्थमाला, २०१४.
**प्रश्नमार्गः** - आचार्या गुरुप्रसाद गौड़, चौखम्बा सुरभारती प्रकाशन, २००७.

**प्रश्नविद्या** - आचार्य बादरायणः, डॉं. सुरेशचन्द्र मिश्रा, रंजन् पब्लिकेशन्स , २०१३.

**प्रश्नवैष्णवः** – श्रीमन्नारायणदासः, आचार्य गुरुप्रसाद गौड़, चौखम्बा सुरभारती प्रकाशन, २००३

**प्रश्नशिरोमणिः** – पंडितरुद्रमणिः, पंडितरामदयालु खेमराज श्रीकृष्णदास, श्रीवेंकटेश्वर प्रेस, २००५.

**प्रसवचिन्तामणि** - आचार्या मुकुन्ददैवज्ञः, गोपी लाल अमर, रंजन् पब्लिकेशन्स, १९९९.

**फलितमार्ताण्डः** -पण्डितमुकुन्दवल्लभमिश्रः, मोतीलाल बनारसीदास, २०१३.

**बृहज्जातकम्** - वराहमिहिराचार्यः भट्टोत्पलः, पं. केदारदत्तजोशी, मोतीलाल बनारसीदास, २००५.

**बृहत्पाराशरहोराशास्त्रम्** - पं.पद्मनाभ शर्मा, चौखम्बा सुरभारती प्रकाशन, २००७.

**बृहत्संहिता** – वराहमिहिराचार्यः, सुरेशचन्द्र मिश्रा, रंजन् पब्लिकेशन्स, २००५.

**बृहदारण्यकोपनिषद्** – शङ्कराचार्यः, गीताप्रेस, २०११

**बृहद्वास्तुमाला** - पं.श्रीरामनिहोरद्विवेदि, चौखम्बा सुरभारती प्रकाशन, २००७.

**भुवनदीपक** - श्री पद्मप्रभुसूरि, डॉं शुकदेव चतुर्वेदी, रंजन् पब्लिकेशन्स, २००६.

**मनुस्मृतिः** – मन्वर्थमुक्तावली, मणिप्रभा, भारतीय संस्कृतभवन, २०१०.

**महाभारतम्** - वेदव्यास, रामणरायणदत्तशास्त्रि गीताप्रेस, २०११.

**मूकप्रश्नविचार** - डॉं शुकदेव चतुर्वेदी, रंजन् पब्लिकेशन्स, २०११.

**मूहूर्तचिन्तामणिः** – श्रीरामाचार्यः, केदारदत्त जोशी, मोतीलाल बनारसीदास, २००५.

**योगवासिष्ठ-महारामायणम्** - वाल्मीकि महर्षिः, ठाकुरप्रसादद्विवेदी, चौखम्बा संस्कृतप्रतिष्ठान, २००७.

**रामायणम्** - वाल्मीकि महर्षिः, जानकीनाथ शर्मा, गीताप्रेस, २०१३.

**रावणसंहिता** – डॉ.सुकान्त झा, चौखम्बा संस्कृत सीरीज, २०१३.

**लग्नचन्द्रिका** – श्रीकाशीनाथः, श्रीवासुदेवः, ठाकुरप्रसाद बुक्सेलर, २००९.

**लधुपाराशरी** - रामयत्न ओझा क्षेमाङ्करी, चौखम्बा संस्कृतप्रतिष्ठान, २००५.

**वैशेषिकदर्शनम्** - कणादमहर्षिः, उदयवीरशास्त्रि, विजयकुमार गोविन्दरामहासनन्द, २०१४.

**शिवजातकः** - पं.श्रीमातृप्रसाद पाण्डेयः, चौखम्वा अमरभारती प्रकाशन, २०१०.

**श्रीमद्भगवद्गीता** – वेदव्यासः, शङ्कराचार्यः, श्रीहरिकृष्णदास गोयन्दका, गीताप्रेस, २०११.

**श्रीमाहेश्वरतन्त्रम्** – सरला, कृष्णदास अकादमी, १९९८.

**षट्पञ्चाशिका** – पृथुयशः, डाँ सुरेशचन्द्र मिश्र, रंजन् पब्लिकेशन्स, २०१०.

**सप्त ऋषि नाड़ी** - J N Bhasin, रंजन् पब्लिकेशन्स, २०१०.

**सारावली** - श्री कल्याणवर्मा, डॉ.सत्येन्द्रमिश्रः, चौखम्भा संस्कृतभवन, २०११

**सूर्यसिद्धान्तः** – कपिलेश्वरशास्त्रि, प्रज्ञावर्द्धिनी, चौखम्भा संस्कृतभवन, २००८.